Atha grahaprayoga
अथ ग्रहप्रयोग:
Sanskrit (Devnagri)
Printed on paper
1989 sombat (88 years old)
folio: 2+115
10.8"x4.5"
Complete

# ॥ अथ ग्रहप्रयोगः, अर्थात् ग्रहशान्तिः ॥

तृतीयं संस्करणम् ]

पं० श्रीवायुनन्दन मिश्र

[ मूल्यं द्वादशाणकाः

# भूमिका

मैंने कर्मकाण्ड . षयक ग्रन्थों में इस पुस्तक का अभाव देखकर तथा पण्डितवर्ग की आवश्यकता का अनुभव कर क्रम—युक्त, स-विधि, शास्त्रोक्तानुकूल 'ग्रहशान्तिपद्धति' निर्माण की है। प्रस्तुत पुस्तक का पण्डित-समाज में इतना आदर हुआ कि अल्प काल ही में दो-दो संस्करण समाप्त हो गए। अब यह तीसरा संस्करण भी पण्डित-समाज के कर-कमलों में अर्पण करते हुए मुझे अत्यन्त प्रसन्नता होती है। पूर्व संस्करण में जो त्रुटियाँ रह गयी थीं वे इस संस्करण में दूर कर दी गयी हैं। आशा है, पूर्ववत् इस संस्करण का भी पण्डित-गण यथेष्ट आदर कर मेरे परिश्रम को सफल बनाकर प्रोत्साहन देंगे। इति शम् ॥

'शूर्पवद्दोषमुत्सृज्य गुणं गृह्णन्ति साधवः'।

मध्यमेश्वर काशी
वसन्तपञ्चमी
१९८९

विनीत—
वायुनन्दन मिश्र।

वि० १

# ग्रहशान्तिप्रयोगस्य विषयानुक्रमणिका ।

अ० १

वि० ३



इति विषयानुक्रमः ॥

अ० २

श्रीगणेशाय नमः ॥ साम्बं गणपतिं नत्वा विश्वेशं माधवं तथा ॥
गुरुं ज्ञानप्रदं चैव मातरं पितरं तथा ॥ १ ॥ ग्रन्थसारं समुद्धृत्य बालानां
हितसिद्धये ॥ वायुनन्दनमिश्रेण निबन्धः क्रियतेऽधुना ॥ २ ॥ अथानु-
क्रमः ॥ सुस्नातः प्राङ्मुखो भूत्वा यजमानः कृताह्निकः ॥ आहूय
ब्राह्मणान्कुर्यात्प्रतिज्ञां विधिवत्तदा ॥ १ ॥ गणेशपूजनं कृत्वा वरुणं
च ततो यजेत् ॥ पुण्याहवाचनं कृत्वाऽभिषेकं कारयेत्ततः ॥ २ ॥ गौर्या-
दिपूजनं चैव घृतमातृकपूजनम् ॥ आयुष्यमन्त्रपाठं तु नान्दीश्राद्ध-

प्र० मतः परम्॥३॥सर्वेषां वरणं कृत्वा सर्वतोभद्रपूजनम् ॥ततः प्रधानदे-
वस्य पूजनं च समारभेत्॥४॥स्थाप्याग्निं सुग्रहाणां च स्थापनं कुश- प्र०
१ कण्डिकाम् ॥ कृत्वा ततो यजेदाज्याहुतिं भक्तिपुरस्सरः ॥५॥ सूर्य्या-
दीनां ग्रहाणाञ्च होमः कार्यस्तिलादिभिः ॥ ततः प्रधानदेवस्य होमः
कार्यो यथाविधि॥६॥सर्वतोभद्रदेवानां हवनं वै समाचरेत् ॥ पूजनं
स्विष्टकृच्चैव घृतेनैव नवाहुतिः॥७॥ दिक्पालेभ्यो बलिं दीपं सूर्यादी-
नामतः परम्॥अम्बिकायै बलिं दद्याद्द्यात्क्षेत्राधिपाय च॥८॥पूर्णा- १

हुतिमथो हुत्वा वसोर्द्धारां समाचरेत ॥भस्मना त्र्यायुषं कृत्वा संस्र-
वप्राशनादिकम्॥९॥श्रेयोदानं ब्राह्मणेभ्यो दद्यात् स्वर्णसुदक्षिणाम्॥
कारयेदभिषेकादीन् विसर्जनमतः परम्॥१०॥भोजनं ब्राह्मणैः सार्द्धं
सतां चायमनुक्रमः॥ अथ कर्तव्यता॥चन्द्रादिशुभग्रहानुकूलसमये
शुभे दिने शुभे लग्ने च कृतनित्यक्रियो यजमानः शुभासने प्राङ्मुख
उपविश्य स्वदक्षिणतःपत्नीं चोपवेश्य। ॐ केशवाय नमः १ ॐ नारा-
यणाय नमः २ ॐ माधवाय नमः ३॥इति त्रिराचम्य॥ ॐ पवित्रेस्थो

वैष्णव्यौ सवितुर्व्वः प्रसवऽउत्पुनाम्म्यच्छिद्द्रेणपवित्त्रेण सूर्य्यस्य
प्र० रश्म्मिभिः॥ तस्यं ते पवित्त्रपते पवित्त्रपूतस्य यत्कामः पुने तच्छकेे प्र०
२ यम्॥ १ ॥इति मन्त्रेण पवित्रंधारणं कृत्वा ततः प्राणायामत्रयं कुर्यात्।
ॐअपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा॥ यः स्मरेत्पुण्डरीकाक्षं
स बाह्याभ्यन्तरः शुचिः॥ इत्यात्मानं पूजासामग्रीं च सम्प्रोक्ष्य॥ तण्डु-
लपूरितताम्रपात्रे मृण्मये वा कुंकुमेनाष्टदलं पद्मं कृत्वा तदुपरि गोम-
यमयीं गौरीं फलमयं गणेशं च संस्थाप्य [illegible] अक्षतपुष्पाणि गृहीत्वा २

टि० १ पवित्रलक्षणं कात्यायनेनोक्तम् यथा—नान्तर्गर्भिणं साग्रं कौशं द्विदलमेव च ॥ प्रादेशमात्रं विज्ञेयं पवित्रं यत्रकुत्रचित् ॥

आनोभद्रादीन् मङ्गलमन्त्रान्पठेत् ॥ ॐ आनोभद्राः क्रतवो यन्तु विश्वतोदब्धासोऽअपरीतासऽउद्भिदः ॥ देवानोयथासदमिद्वृधेऽ-असन्नप्रायुवो रक्षितारो दिवे दिवे ॥१॥ देवानांभद्रासुमतिर्ऋजूय-तान्देवानांरातिरभिनोनिवर्त्तताम् ॥ देवानांसख्यमुपसेदिमाव-यन्देवानऽआयुः प्रतिरन्तुजीवसे॥२॥तान्पूर्वयानिविदाहूमहेवय-म्भगम्मित्रमदितिन्दक्षमस्त्रिधम्॥ अर्यमणंवरुणःसोममश्विना सरस्वतीनःसुभगामयस्करत् ॥३॥ तन्नो वातोमयोभुवातुभेषजन्त

न्मातापृथिवीतत्पिताद्यौः॥तद्ग्रावाणःसोमसुतोमयोभुवस्तदश्विना प्र०
प्र० शृणुतन्धिष्ण्यासुवम्॥४॥ तमीशानं जगतस्तस्थुषस्पतिन्धियंजि
२ न्वमवसेहूमहेवयम्॥पूषा नोयथावेदसामसद्वृधेरक्षितापायुरदब्धः
स्वस्तये॥५॥ स्वस्तिनऽइन्द्रोवृद्धश्रवाः स्वस्तिनः पूषाविश्ववेदाः॥
स्वस्तिनस्तार्क्ष्योऽअरिष्टनेमिःस्वस्तिनोबृहस्पतिर्दधातु ॥६॥ पृष
दश्वामरुतःपृश्निमातरःशुभंयावानोविदथेषु जग्मयः ॥ अग्नि ३
र्जिह्वामनवःसूरचक्षसोविश्वेनोदेवाऽअवसागमन्निह॥७॥भद्रंकर्णे

भिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्य्यजत्राः ॥ स्थिरैरङ्गैस्तुष्टुवा ꣳ
संस्तनूभिर्व्यशेमहि देवहितं यदायुः ॥८॥ शतमिन्नुशरदोऽअन्ति
देवा यत्रानश्चक्राजरसन्तनूनाम् ॥ पुत्रासो यत्र पितरो भवन्ति मानो म
ध्यारीरिषतायुर्गन्तोः ॥९॥ अदितिर्द्यौरदितिरन्तरिक्षमदितिर्म्माता
तासपितासपुत्रः ॥ विश्वेदेवाऽअदितिः पञ्चजनाऽअदितिर्ज्जात
मदितिर्ज्जनित्वम् ॥१०॥ द्यौः शान्तिरन्तरिक्षꣳ शान्तिः पृथिवीशा
न्तिरापः शान्तिरोषधयः शान्तिः ॥ वनस्पतयः शान्तिर्विश्वेदेवाः

प्र० शान्तिर्ब्रह्म शान्तिः सर्व्वꣳ शान्तिः शान्तिरेव शान्तिः सा मा शान्ति
रेधि ॥ ११ ॥ यतोयतः समीहसे ततोनोऽअभयङ्कुरु ॥ शन्नः कुरुप्रजा प्र०
४ भ्योऽभयन्नः पशुभ्यः ॥ १२ ॥ सुशान्तिर्भवतु ॥ श्रीमन्महागणाधिप-
तये नमः ॥ लक्ष्मीनारायणाभ्यां नमः ॥ उमामहेश्वराभ्यां नमः ॥
वाणीहिरण्यगर्भाभ्यां नमः ॥ शचीपुरन्दराभ्यां नमः ॥ मातापितृभ्यां
नमः ॥ इष्टदेवताभ्यो नमः ॥ कुलदेवताभ्यो नमः ॥ ग्रामदेवताभ्यो
नमः ॥ वास्तुदेवताभ्यो नमः ॥ स्थानदेवताभ्यो नमः ॥ सर्वेभ्यो देवेभ्यो ४

नमः॥सर्वेभ्यो ब्राह्मणेभ्यो नमः॥ विश्वेशं माधवं ढुण्ढिं दण्डपाणिं च
भैरवम्॥वन्दे काशीं गुहां गङ्गां भवानीं मणिकर्णिकाम्॥ १॥वक्रतु-
ण्डमहाकाय कोटिसूर्यसमप्रभ॥निर्विघ्नं कुरु मे देव सर्वकार्येषु सर्वदा
॥२॥सुमुखश्चैकदन्तश्च कपिलो गजकर्णकः॥ लम्बोदरश्च विकटो
विघ्ननाशो विनायकः॥३॥ धूम्रकेतुर्गणाध्यक्षो भालचन्द्रो गजा-
ननः ॥द्वादशैतानि नामानि यः पठेच्छृणुयादपि ॥४॥ विद्यारम्भे
विवाहे च प्रवेशे निर्गमे तथा॥संग्रामे सङ्कटे चैव विघ्नस्तस्य न जायते

प्र० ॥५॥शुक्लाम्बरधरं देवं शशिवर्णं चतुर्भुजम्॥प्रसन्नवदनं ध्यायेत् सर्व प्र०
विघ्नोपशान्तये ॥६॥ अभीप्सितार्थसिद्ध्यर्थं पूजितो यः सुरासुरैः ॥
५ सर्वविघ्नहरस्तस्मै गणाधिपतये नमः ॥७॥ सर्वमङ्गलमाङ्गल्ये शिवे
सर्वार्थसाधिके॥ शरण्ये त्र्यम्बके गौरि नारायणि नमोऽस्तु ते ॥८॥
सर्वदा सर्वकार्येषु नास्ति तेषाममङ्गलम्॥ येषां हृदिस्थो भगवान्मङ्ग
लायतनं हरिः॥९॥ तदेव लग्नं सुदिनं तदेव ताराबलं चन्द्रबलं तदेव ॥
विद्याबलं दैवबलं तदेव लक्ष्मीपते तेऽङ्घ्रियुगं स्मरामि॥१०॥लाभस्तेषां ५

जयस्तेषां कुतस्तेषां पराजयः॥येषामिन्दीवरश्यामो हृदयस्थो जना
र्दनः॥ ११॥यत्र योगेश्वरःकृष्णो यत्र पार्थो धनुर्धरः ॥ तत्र श्रीर्विजयो
भूतिर्ध्रुवा नीतिर्मतिर्मम ॥१२॥ अनन्याश्चिन्तयन्तो मां ये जनाः
पर्युपासते ॥तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥१३॥
स्मृतेःसकलकल्याणं भाजनं यत्र जायते॥पुरुषं तमजं नित्यं व्रजामि
शरणं हरिम् ॥ १४ ॥ सर्वेष्वारम्भकार्येषु त्रयस्त्रिभुवनेश्वराः ॥
देवा दिशन्तु नः सिद्धिं ब्रह्मेशानजनार्दनाः ॥ १५ ॥ यजमानः

जलाक्षतद्रव्यं चादाय सङ्कल्पं कुर्यात् । ॐ विष्णुर्विष्णुर्विष्णुः श्रीमद्भगवतो महापुरुषस्य विष्णोराज्ञया प्रवर्तमानस्य अद्य श्रीब्रह्मणो द्वितीये परार्द्धे विष्णुपदे श्रीश्वेतवाराहकल्पे वैवस्वतमन्वन्तरे अष्टाविंशतितमेयुगे कलियुगे कलिप्रथमचरणे भूर्लोके जम्बूद्वीपे भारतवर्षे भरतखण्डे आर्यावर्तैकदेशे(अविमुक्तवाराणसीक्षेत्रे आनन्दवने महाश्मशाने गौरीमुखे त्रिकण्टकविराजिते) भागीरथ्याःपश्चिमे भागे विक्रमशके बौद्धावतारे अमुकनामसंवत्सरे श्रीसूर्ये अमुका-

यने अमुकऋतौ महामाङ्गल्यप्रदमासोत्तमे मासे अमुकमासे अमुकपक्षे अमुकतिथौ अमुकवासरे अमुकनक्षत्रे अमुकयोगे अमुककरणे अमुकराशिस्थिते चन्द्रे अमुकराशिस्थिते श्रीसूर्ये अमुकराशिस्थिते देवगुरौ शेषेषु ग्रहेषु यथायथाराशिस्थानस्थितेषु सत्सु एवं ग्रहगुणगणविशेषणविशिष्टायां शुभपुण्यतिथौ अमुकगोत्रः अमुकशर्माहं मम आत्मनः श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थं कायिकवाचिकमानसिकसांसर्गिकचतुर्विधपातक

दुरितक्षयद्वारा धर्मार्थकाममोक्षचतुर्विधपुरुषार्थप्राप्त्यर्थं श्रीपरमे-
श्वरप्रीत्यर्थं ग्रहशान्तिमहं करिष्ये ( वा अमुकशान्तिं करिष्ये )
तदङ्गत्वेन स्वस्तिपुण्याहवाचनं ( अविघ्नपूजनम् मण्डपदेवता
पूजनं ) मातृकापूजनं वसोर्द्धारापूजनं आयुष्यमन्त्रजपं
साङ्कल्पिकेन विधिना नान्दीश्राद्धमाचार्यादिवरणानि ( ग्रहानु
कूलतासिद्ध्यर्थं ग्रहयज्ञं ) च करिष्ये ॥ तत्रादौ निर्विघ्नता
सिद्ध्यर्थं गणेशाम्बिकयोः पूजनमहं करिष्ये इति सङ्कल्पं कृत्वा

प्र० ७

षोडशोपचारैः गणपतिं पूजयेत्॥ हस्ते अक्षतान् गृहीत्वा गणपति मावाहयेत्॥ तत्र मन्त्रः॥ एकदन्तं शूर्पकर्णं गजवक्त्रं चतुर्भुजम्॥ पाशांकुशधरं देवं ध्यायेत् सिद्धिविनायकम् ॥ १ ॥ ध्याये-द्गजाननं देवं तप्तकाञ्चनसन्निभम् ॥ चतुर्भुजं महाकायं सर्वाभरणभूषितम् ॥ २ ॥ दंताक्षमालापरशुं पूर्णमोदकधारिणम् ॥मोदकासक्तशुंडाग्रमेकदन्तं विनायकम् ॥३॥ वा ॥ हे हेरम्ब

टि० १ षोडशोपचारास्तु कर्मप्रदीपे—" आवाहनासने पाद्यमर्घ्यमाचनीयकम् ॥ स्नानं वस्त्रोपवीतं च गंधमाल्यान्यनुक्रमात् ॥ १ ॥ धूपं दीपं च नैवेद्यं ताम्बूलं च प्रदक्षिणा ॥ पुष्पाञ्जलिरिति प्रोक्ता उपचारास्तु षोडश ॥ २ ॥" " फलेन सफलावाप्तिः साङ्गता दक्षिणार्पणात् " इति ।

त्वमेह्येहि ह्याम्बिकात्र्यम्बकात्मज ॥ सिद्धिबुद्धिपते त्र्यक्ष लक्षलाभ प्र०
प्र० पितुःपितः ॥ नागास्यं नागहारं त्वां गणराजं चतुर्भुजम्॥ भूषितं
८ स्वायुधैर्दिव्यैः पाशांकुशपरश्वधैः ॥४॥ आवाहयामि पूजार्थं रक्षार्थं
च मम क्रतोः ॥ इहागत्य गृहाण त्वं पूजां यागं च रक्ष मे ॥५॥ ॐ
गणानांत्वागणपतिꣳहवामहे प्रियाणान्त्वाप्रियपतिꣳहवामहेनिधी
नांत्वानिधिपतिꣳ हवामहे वसोमम॥आहमंजानिगर्भधमात्वमं
जासिगर्भधम् ॥ ॐ भूर्भुवः स्वः सिद्धिबुद्धिसहिताय गणपतये नमः

गणपतिमावाहयामि स्थापयामि ॥ हेमाद्रितनयां देवीं वरदां शङ्कर
प्रियाम् ॥ लम्बोदरस्य जननीं गौरीमावाहयाम्यहम् ॥ ॐ अम्बेऽअ-
म्बिकेऽम्बालिकेनमानयातिकश्चन ॥ ससंस्त्यश्वकः सुभद्रिकां
काँपीलवासिनीम् ॐ भूर्भुवः स्वः गौर्यै नमः गौरीमावाहयामि
स्थापयामि ॥ ॐ मनो जूतिर्जुषतामाज्यंस्य बृहस्पतिर्यज्ञमिमंत
नोत्वरिष्टं यज्ञ ६ समिमन्दधातु॥ विश्वेदेवासऽइहमादयन्तामो३ँ
प्रतिष्ठ ॥ १ ॥अस्यै प्राणाःप्रतिष्ठन्तु अस्यै प्राणाःक्षरन्तु च ॥अस्यै

प्र० देवत्वमर्चायै मामहेति च कश्चन॥ १ ॥ गणेशाम्बिके सुप्रतिष्ठिते वरदे प्र०
भवतम ॥ विचित्ररत्नखचितं दिव्यास्तरणसंयुतम्॥ स्वर्णसिंहासनं
१ चारुगृहीष्व सुरपूजित॥ १॥ ॐ पुरुषऽएवेदꣳ सर्व्वंसद्भूतं यच्च भाव्व्य
म्॥ उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥ ॐ गणेशाम्बिकाभ्यां
नमः आसनं स०॥ ॐ सर्वतीर्थसमुद्भूतं पाद्यं गन्धादिभिर्युतम् ॥
विघ्नराज गृहाणेदं भगवन्भक्तवत्सल॥२॥ ॐ एतावानस्य महिमा १
तोज्यायाँश्चपूरुषः॥ पादोस्य विश्वाभूतानि त्रिपादस्यामृतन्दिवि॥

ग० पाद्यम्० ॥ ॐ गणाध्यक्षनमस्तेऽस्तु गृहाण करुणाकर ॥ अर्घ्यं
च फलसंयुक्तं गंधमाल्याक्षतैर्युतम् ॥ ॐ त्रिपादूर्ध्वऽउदैत्पुरुषः पादो
स्येहाभवत्पुनः ॥ ततो विष्वङ्व्यक्रामत्साशनानशनेऽअभि
॥ ३ ॥ ग० अर्घ्यम् ॥ विनायक नमस्तुभ्यं त्रिदशैरभिवन्दित ॥
गंगोदकेन देवेश कुरुष्वाचमनं प्रभो ॥ ॐ ततो विराडजायत विराजोऽ
अधिपूरुषः ॥ सजातोऽअत्यरिच्यत पश्चाद्भूमिमथोपुरः ॥४॥ ग०
आचमनम् ॥ मन्दाकिन्यास्तु यद्वारि सर्वपापहरं शुभम् ॥ तदिदं

प्र० कल्पितं देव स्नानार्थं प्रतिगृह्यताम् ॥ ॐ तस्माद्यज्ञात्सर्व्वहुतः सम्भृ प्र०
तं पृषदाज्यम् ॥ पशूँस्ताँश्चक्रे वायव्यानारण्या ग्राम्याश्च ये॥५॥
१० ग० स्नानम्० ॥अथवा । ॐ गणेशाम्बि० एतानि पाद्यार्घ्याचमनी
यस्नानीयपुनराचमनीयानि स० ॥ ॐ पञ्चनद्यः सरस्वतीमपियं
न्तिसस्त्रोतसः ॥ सरस्वतीतुपञ्चधा सो देशेभवत्सरित् ॥ पञ्चामृतं
मयानीतं पयो दधि घृतं मधु ॥शर्करा च समायुक्तं स्नानार्थं प्रति
गृह्यताम् ॥ १॥ ॐ ग० पञ्चामृतस्नानं स० । अथवा ॥ कामधेनु १०

समुद्भूतं सर्वेषां जीवनं परम् ॥ पावनं यज्ञहेतुश्च पयः स्नानार्थमर्पि
तम्॥ ॐ पयः पृथिव्यां पयऽओषधीषु पयो दिव्यन्तरिक्षे पयोधाः॥
पयस्वतीः प्रदिशः सन्तु मह्यम् ॥ ॐ ग० पयः स्नानं स०॥ पयसस्तु
समुद्भूतं मधुराम्लं शशिप्रभम्॥ दध्यानीतं मया देव स्नानार्थं प्रति
गृह्यताम् ॥ ॐ दधिक्राव्णोऽअकारिषं जिष्णोरश्वस्य वाजिनः ॥
सुरभिनोमुखाकरत्प्रणऽआयूंषितारिषत् ॥ ॐ ग० दधिस्नानं
स० ॥ नवनीतसमुत्पन्नं सर्वसंतोषकारकम् ॥ घृतं तुभ्यं प्रदास्यामि

स्नानाथ प्रतिगृह्यताम् ॥ॐ घृतम्मिंमिक्षेघृतमंस्य योनिर्घृतेश्रितो प्र०
प्र० घृतम्वंस्यधामं ॥ अनुष्वधमावहमादयंस्वस्वाहांकृतं वृषभव्वक्षिह
११ व्यम॥ ॐ ग० घृतस्नानं स० ॥ पुष्परेणुसमुद्भूतं सुस्वादु मधुरं
मधु ॥ तेजःपुष्टिकरं दिव्यं स्नानार्थं प्रतिगृह्यताम् ॥ॐ मधुव्वा
तांऽऋतायतेमधुंक्षरन्तिसिन्धवꣳ ॥ माध्वीर्न्नꣳ सन्त्वोषंधीꣳ ॥१॥
मधुनक्तमुतोषसोमधुमत्पार्त्थिव ꣳ रजः ॥ मधुद्यौरंस्तुन ꣳ पिता
॥ २॥मधुमान्नोव्वनस्पतिर्म्मधुमाँऽअस्तु सूर्यः ॥ माध्वीर्ग्गावो ११

भवन्तुनः॥३॥ ॐ ग० मधुस्नानं स०॥ इक्षुरससमुद्भूतां शर्करां पुष्टिदां शुभाम्॥ मलापहारिकां दिव्यां स्नानार्थं प्रतिगृह्यताम्॥ ॐ अपा ᳪ रसमुद्वयसᳪ सूर्येसन्तᳪ समाहितम् ॥ अपा ᳪ रसस्य योरसस्तंवोगृह्णाम्युत्तममुपयामगृहीतोसीन्द्रायत्त्वाजुष्टंगृह्णाम्येष तेयोनिरिन्द्रायत्वाजुष्टतमम्॥ॐ ग० शर्करास्नानं स० ॥ ॐआपो हिष्ठामयोभुवस्तानऽऊर्जेदधातनमहेरणायचक्षसे॥ अथवा॥ शुद्ध वालः सर्वशुद्धवालो मणिवालस्तऽआश्विनाः श्येतः श्येताक्ष्यो

प्र० रुणस्ते रुद्रायं पशुपतये कृष्णांश्यामाऽअंवलिप्तारौद्रा नभोरूपाः
पार्ज्जन्याः ॥ गङ्गा च यमुना चैव गोदावरी सरस्वती ॥ नर्मदा प्र०
१२ सिन्धुकावेरी स्नानार्थं प्रतिगृह्यताम् ॥ ॐ ग० शुद्धोदकस्नानं स०
ॐ ग० स्नानान्ते आचमनं स० । ॐ युवासुवासाः परिवीतऽआगा
त्सऽउश्रेयान्भवतिजायमानः ॥ तंधीरासः कवयऽउन्नयन्तिस्वाध्यो
मनसादेवयंतः ॥ शीतवातोष्णसंत्राणं लज्जाया रक्षणं परम् ॥ देहाल-
ङ्करणं वस्त्रमतः शान्तिं प्रयच्छ मे ॥ ॐ ग० वस्त्रं स० ॐ ग० आचमनं १२

स० ॥ ॐ सुजातो ज्योतिषा सह शर्म्म वरूथमासदत्स्वः ॥ वासोऽ
अग्ने विश्वरूप संव्ययस्व विभावसो ॥ उपवस्त्रं ॐ ग० आचमनं
सम०॥ वा ॐ ग० वस्त्रोपवस्त्रार्थे रक्तसूत्रं समर्पयामि॥ अलङ्करणार्थे
अक्षतान् स० ॥ ॐ यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुर-
स्तात् ॥ आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः ॥
नवभिस्तन्तुभिर्युक्तं त्रिगुणं देवतामयम् ॥ उपवीतं मया दत्तं गृहाण
परमेश्वर॥ॐ ग० यज्ञोपवीतं स० ॥ॐ ग० आचमनं स० ॥ श्रीखण्डं

प्र० चन्दनं दिव्यं गन्धाढ्यं सुमनोहरम्॥ विलेपनं सुरश्रेष्ठ चन्दनं प्रति
१३ गृह्यताम्॥ ॐ त्वां गन्धर्व्वाऽअखनँस्त्वामिन्द्रस्त्वाम्बृहस्पतिः॥ प्र०
त्वामोषधेसोमोराजाव्विद्वान्यक्ष्मादमुच्यत ॐ ग० गन्धं स०॥
अक्षताश्च सुरश्रेष्ठ कुङ्कुमाक्ताः सुशोभिताः। मया निवेदिता भक्त्या
गृहाण परमेश्वर॥ ॐ अक्षन्नमीमदन्तह्यवप्रियाऽअधूषत॥ अस्तो
षतस्वभानवोविप्प्रानविष्ठयामतीयोजान्विन्द्रतेहरी॥ ॐ ग० अक्ष-
तान् स०॥ माल्यादीनि सुगन्धीनि मालत्यादीनि वै प्रभो॥ मया- १३

र्हतानि पुष्पाणि पूजार्थं प्रतिगृह्यताम् ॥ १ ॥ ओषधीः प्रतिमोदध्वंपु
ष्पवतीः प्रसूवरीः ॥ अश्वाऽइवसजित्वरीर्वीरुधः पारयिष्णवः ॥ ॐ
ग० पुष्पमालां स० ॥ दूर्वाङ्कुरान्सुहरितानमृतान्मङ्गलप्रदान् ॥
आनीतांस्तव पूजार्थं गृहाण गणनायक ॥ ॐ काण्डात्काण्डात्प्ररोहं-
न्तीपरुषः परुषस्परि ॥ एवानोदूर्वेप्रतनुसहस्त्रेणशतेनं च ॥ ॐ ग०
दूर्वाङ्कुरान्स० ॥ सिन्दूरं शोभनं रक्तं सौभाग्यं सुखवर्द्धनम् ॥ शुभदं
कामदं चैव सिन्दूरं प्रतिगृह्यताम् ॥ ॐ सिन्धोरिव प्राध्वने शूघना

प्र० सोव्वातम्प्रमियः पतयन्तियह्वाः ॥ घृतस्य धाराऽअरुषो नव्वाजी- प्र०
काष्ठाभिन्दन्नूर्म्मिभिः पिन्वमानः ॥ ग० सिन्दूरं स० । नानापरि-
१४ मलैर्द्रव्यैर्निर्मितं चूर्णमुत्तमम् । अबीरनामकं चूर्णं गन्धं चारु प्रगृह्य-
ताम् ॥ ॐ अहिरिव भोगैः पर्य्येति बाहुञ्ज्याया हेतिम्परिबाधमानः ॥
हस्तघ्नो व्विश्वा व्वयुनानि व्विद्वान्पुमान्पुमाꣳसम्परिपातु व्विश्वतः ॥
ॐ ग० नानापरिमलद्रव्याणि स० ॥ वनस्पतिरसोद्भूतो गन्धाढ्यो १५
गन्ध उत्तमः ॥ आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ॥ ॐ

धूरसि धूर्व धूर्वन्तं धूर्वतं योऽस्मान्धूर्वति तं धूर्व यं वयं धूर्वाम। देवाना-
मसि वह्नितमं सस्नितमं पप्रितमं जुष्टतमं देवहूतमम् ॥ ॐ ग०
धूपं स०॥ साज्यं च वर्तिसंयुक्तं वह्निना योजितं मया॥ दीपं गृहाण
देवेश त्रैलोक्यतिमिरापहम्॥ भक्त्या दीपं प्रयच्छामि देवाय परमा-
त्मने ॥ त्राहि मां निरयाद्घोराद्दीपज्योतिर्नमोऽस्तु ते॥ ॐ अग्निर्ज्यो-
तिर्ज्योतिरग्निः स्वाहा सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहा॥ अग्नि
र्वर्चो ज्योतिर्वर्चः स्वाहा सूर्यो वर्चो ज्योतिर्वर्चः स्वाहा ॥ ज्योतिः

प्र० सूर्य्यꣳ सूर्य्यो ज्योतिꣳ स्वाहा ॥ १ ॥ ॐ ग० दीपं स० ॥ हस्त प्र०
प्रक्षालनम् ॥ नैवेद्यं गृह्यतां देव भक्तिं मे ह्यचलां कुरु ॥ ईप्सितं मे
१५ वरं देहि परत्र च परां गतिम् ॥ शर्कराखण्डखाद्यानि दधिक्षीरघृतानि
च ॥ आहारं भक्ष्यभोज्यं च नैवेद्यं प्रतिगृह्यताम् ॥ ॐ नाभ्याऽआ-
सीदन्तरिक्षꣳ शीर्ष्णो द्यौः समवर्त्तत ॥ पद्भ्याम्भूमिर्दिशꣳ श्रो-
त्रात्तथा लोकाँ२ऽअकल्पयन् ॥ ॐ प्राणाय स्वाहा ॥ ॐ अपानाय
स्वा० ॐ समानाय स्वा० ॥ ॐ उदानाय स्वा० ॥ ॐ व्यानाय १५

१ टि०—अथवा अन्नपतेऽन्नस्य नो देह्यनमीवस्य शुष्मिणः ॥ प्रप्रदातारन्तारिषऽऊर्जन्नो धेहि द्विपदे चतुष्पदे ॥

स्वा० ॐ ग० नैवेद्यं स० ॥ आचमनीयं मध्ये पानीयं उत्तरा
पोशनं स० ॥ ॐ चन्दनं मलयोद्भूतं कस्तूर्यादिसमन्वितम् ॥
करोद्वर्तनकं देव गृहाण परमेश्वर ॥ ॐ अ॒ꣳशुना॑तेअ॒ꣳशुः पृ॑च्यता॒ं
परु॑षा॒परुः॑ ॥ ग॒न्धस्ते॒सोम॑मवतु॒मदा॑य॒रसो॒ऽअच्यु॑तः ॥ ॐ ग०
चन्दनेन करोद्वर्तनं स० ॥ ॐ पूगीफलं महद्दिव्यं नागवल्लीदलैर्युतम् ॥
एलादिचूर्णसंयुक्तं ताम्बूलं प्रतिगृह्यताम ॥ ॐ यत्पुरु॑षेणह॒विषा॑दे॒वा
य॒ज्ञमत॑न्वत ॥ व॒स॒न्तो॑स्यासी॒दाज्यं॑ग्री॒ष्मऽइ॒ध्मः श॒रद्ध॒विः ॥ ॐ ग०

प्र० मुखवासार्थे पूगीफलताम्बूलं स० ॥ इदं फलं मया देव स्थापितं प्र०
१६ पुरतस्तव॥तेन मे सफलावाप्तिर्भवेज्जन्मनि जन्मनि।ॐ या ऽ फलिनी
र्य्याऽअफलाऽअपुष्पायाश्चपुष्पिणीः ॥ बृहस्पतिप्रसूतास्तानो
मुञ्चन्त्वꣳ हसः ॥ गणे० नारिकेलफलं स० ॥ हिरण्यगर्भगर्भस्थं
हेमबीजं विभावसोः ॥ अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे ॥
ॐ हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेकऽआसीत् ॥ १६
सदाधार पृथिवीन्द्यामुतेमां कस्मै देवाय हविषा विधेम ॥ ॐ ग०

कृतायाः पूजायाः साद्गुण्यार्थे द्रव्यदक्षिणां स० ॥ कदलीगर्भसम्भूतं कर्पूरं तु प्रदीपितम् ॥ आरार्तिकमहं कुर्वे पश्य मे वरदो भव ॥ ॐ इद ँ हविः प्रजननम्मेऽअस्तुदशवीर ँ सर्वगण ँ स्वस्तये ॥ आत्मसनि प्रजासनि पशुसनि लोकसन्न्यभयसनि । अग्निः प्रजाम्बहुलाम्मे करोत्वन्नं पयोरेतोऽअस्मासु धत्त ॥ आरात्रिपार्थिव ँ रजः पितुरप्रायिधामभिः ॥ दिव ँ सदा ँसिबृहतीवितिष्ठसऽआत्वेषंवर्त्ततेतमः ॥ ॐ ग० कर्पूरनीराजनं स० ॥ नानासु-

प्र० गन्धिपुष्पाणि यथाकालोद्भवानि च॥ पुष्पाञ्जलिर्मया दत्तो गृहाण प्र०
१७ परमेश्वर ॥ ॐ यज्ञेनयज्ञमयजन्तदेवास्तानिधर्म्माणिप्रथमान्या-
सन् ॥ तेहनाकंमहिमानःसचन्तयत्रपूर्व्वे साध्याःसन्तिदेवाः ॥
ॐ गणानान्त्वा० धम १ ॐ अम्बे अम्बि० नीम॥ ॐ राजाधि-
राजाय प्रसह्य साहिने नमो वयं वैश्रवणाय कुर्महे॥ स मे कामान्काम-
कामाय मह्यं कामेश्वरो वैश्रवणो ददातु ॥ कुवेराय वैश्रवणाया- १७
महाराजाय नमः। ॐ स्वस्ति साम्राज्यं भौज्यं स्वाराज्यं वैराज्यं

पारमेष्ठ्यंराज्यं महाराज्यमाधिपत्यमयंसमन्तपर्यायै स्यात् सार्व
भौमस्सार्व्वायुषांतादापरार्धात् पृथिव्यैसमुद्रपर्यन्तायाऽएकराडिति
तदप्येषश्लोकोभिगीतो मरुतःपरिवेष्टारो मरुत्तस्यावसन्गृहे ॥ आवी
क्षितस्य कामप्रेर्विश्वेदेवाः सभासद इति ॥ ॐ व्विश्वतंश्चक्षुरुतव्वि
श्वतोमुखोव्विश्वतोव्वाहुरुतव्विश्वतंस्पात्॥ सम्बाहुभ्यान्धमंतिसंपत
त्रैर्द्यावाभूमीञ्जनयंन्देवऽएकः॥ॐ ग० मन्त्रपुष्पाञ्जलिंस०।यांनि

१ टि० पदे पदेभ्यः परिपूजकेभ्यः सद्यो ऽश्वमेघादिफलं ददाति ॥ तां सर्वपापक्षयहेतुभूतां प्रदक्षिणां ते परितः करोमि ॥

प्र० कानि च पापानि ज्ञाताज्ञातकृतानि च ॥ तानि सर्वाणि नश्य- प्र०
न्ति प्रदक्षिणपदे पदे॥ॐ ये तीर्थानि प्रचरन्ति सृकाहस्ता निषंगिणः
१८ तेषां ७ँ सहस्रयोजनेवधन्वानितन्मासि ॥ॐ ग० प्रदक्षिणा० स० ॥
अथ विशेषार्घः ॥ जलगन्धाक्षतफलपुष्पदूर्वादक्षिणाः ताम्रपात्रे
प्रक्षिप्य अवनिकृतजानुमण्डलं कृत्वा अर्घपात्रमञ्जलिना गृहीत्वा
श्लोकान्पठेत्॥ॐ रक्ष रक्ष गणाध्यक्ष रक्ष त्रैलोक्यरक्षक ॥ भक्ता- १८
नामभयं कर्ता त्राता भव भवार्णवात् ॥ १ ॥ द्वैमातुर कृपासिन्धो

षाण्मातुराग्रज प्रभो ॥ वरदस्त्वं वरं देहि वांछितं वांछितार्थद ॥ २ ॥ अने-
न सफलार्घ्येण सफलोऽस्तु सदा मम ॥ ॐ ग० विशेषार्घ्यं सम० ॥ अथ
प्रार्थना ॥ विघ्नेश्वराय वरदाय सुरप्रियाय लम्बोदराय सकलाय
जगद्धिताय ॥ नागाननाय श्रुतियज्ञविभूषिताय गौरीसुताय गण-
नाथ नमो नमस्ते ॥ १ ॥ भक्तार्तिनाशनपराय गणेश्वराय सर्वेश्व-
राय शुभदाय सुरेश्वराय ॥ विद्याधराय विकटाय च वामनाय भक्त-
प्रसन्नवरदाय नमो नमस्ते ॥ २ ॥ नमस्ते ब्रह्मरूपाय विष्णुरूपाय

प्र० ते नमः॥ नमस्ते रुद्ररूपाय करिरूपाय ते नमः ॥३॥ विश्वरूप- प्र०
स्वरूपाय नमस्ते ब्रह्मचारिणे ॥ भक्तप्रियाय देवाय नमस्तुभ्यं
११ विनायक ॥ ४ ॥ लम्बोदर नमस्तुभ्यं सततं मोदकप्रिय ॥ निर्विघ्नं
कुरु मे देव सर्वकार्येषु सर्वदा॥ ५ ॥ त्वां विघ्नशत्रुदलनेति च सुन्द-
रेति भक्तप्रियेति सुखदेति फलप्रदेति ॥ विद्याप्रदेत्यघहरेति च ये
स्तुवन्ति तेभ्यो गणेश वरदो भव नित्यमेव॥ ६ ॥ गणेशपूजने कर्म ११
यन्न्यूनमधिकं कृतम्॥ तेन सर्वेण सर्वात्मा प्रसन्नोऽस्तु सदा मम॥७॥

अनया पूजया गणेशाम्बिके प्रीयेतां न मम ॥

इति गणेशपूजनं समाप्तम् ।

## * अथ कलशस्थापनम् *

तत्रादौ कलशलक्षणं यथा– स्वर्णं वा राजतं वापि ताम्रं मृण्मयजं तु वा ॥ अकालमव्रणं चैव सर्वलक्षणसंयुतम् ॥ पञ्चाशाङ्गुलवैपुल्य-मुत्सेधे षोडशाङ्गुलम् ॥ द्वादशाङ्गुलकं मूलं मुखमष्टाङ्गुलं तथा ॥ अथ सप्त धान्यानि ॥ यवगोधूमधान्यानि तिलाः कङ्गुस्तथैव च ॥ श्याम-काञ्चणकाश्चैव सप्त धान्यानि संविदुः ॥ अथवा ॥ यवधान्यतिलाः कङ्गुः

प्र० मुद्गचणकश्यामकाः॥ एतानि सप्त धान्यानि सर्वकार्येषु योजयेत् । प्र०
* अथ सप्त मृदः * अश्वस्थानाद्गजस्थानाद्वल्मीकात्सङ्गमाद्ध्रदात्॥
२० राजद्वाराच्च गोष्ठाच्च मृदमानीय निक्षिपेत् ॥ * अथ सर्वौषधयः *
मुरा मांसी वचा कुष्ठं शैलेयं रजनीद्वयम् ॥ सठी चम्पकमुस्ता च
सर्वौषधिगणः स्मृतः ॥ * अथ पञ्च पल्लवाः * न्यग्रोधोदुम्बरोऽश्वत्थः
चूतप्लक्षस्तथैव च इति॥ * अथ पञ्च रत्नानि * कनकं कुलिशं मुक्ता २०
पद्मरागं च नीलकम्॥ एतानि पञ्च रत्नानि सर्वकार्येषु योजयेत् ॥

*प्रकारान्तरम्* वज्रमौक्तिकवैदूर्य्यप्रवालं चेन्द्रनीलकम्॥ अलाभे
सर्वरत्नानां हेमं सर्वत्र योजयेत्॥इति॥ ततः कुंकुमादिना भूमौ अष्ट-
दलं पद्मं कृत्वा॥ ॐ महीद्यौ॰ पृथिवीचं नऽइमं युज्ञंमिमिक्षताम्॥
पिपृतान्नोभरीमभिः । इति भूमिं स्पृष्ट्वा ॥ १ ॥ ॐ ओषधयः समं
वदन्तुसोमेनसह राज्ञा ॥ यस्मैकृणोतिब्राह्मणस्तठं. राजन्पारया
मसि ॥ इति धान्यं विकिरेत्॥ ॐ आजिघ्रकलशं मह्यात्वाविशन्त्वि
न्दवः ॥ पुनरूर्जानिवर्त्तस्वसानः सहस्रंधुक्ष्वोरुधारापयस्वती

प्र० पुनर्म्मांविंशताद्धयि ॰ ॥ इति धान्योपरि कलशं स्थापयेत् ॥ २ ॥ प्र०
ॐ व्वरुणस्योत्तम्भनमसिव्वरुणस्यस्कंभसर्ज्जनीस्थोव्वरुणस्यऽऋत
२१ सदन्यसिव्वरुणस्यऽऋतसदनमसिव्वरुणस्यऽऋतसदनमासीद इति
कलशे जलं पूरयेत् ॥ ३ ॥ ॐ त्वांगन्धर्वा० इति गन्धं क्षिपेत्
॥ ४ ॥ ॐ याऽओषधी ॰ पूर्व्वाजातादेवेभ्यस्त्रियुगंपुरा ॥ मनैनुबभ्रू
णामहरुं शतंधामानिसप्तचं । इति सर्वौषधीः ॥ ५ ॥ ॐ कांडा २१
त्कांडात्प्र० च ॥ इति दूर्वाङ्कुरान् ॥ ६ ॥ ॐ अश्वत्थेवोनिषदनं पर्णे-

वौवसतिष्कृता ॥ गोभाजऽइत्किलासथयत्सनवंथ पूरुषम् ॥ इति पञ्च
पल्लवान् ॥ ततः पवित्रं पवित्रेस्थ इति मंत्रेण कलशे क्षिपेत् ॥ ७ ॥
ॐ स्योनापृथिविनोभवानृक्षरानिवेशनी ॥ यच्छानः शर्म्मसप्रथाः
॥ ८ ॥ इति सप्त मृदः । ॐ याः फलिनीर्याऽअफलाअपुष्पाऽयाश्च
पुष्पिणीः ॥ वृहस्पतिप्रसूतास्तानोमुंचन्त्व ६ हं स ः ॥ इति पूगी-
फलम् ॥ ९॥ ॐ परिवाजपतिः कविरग्निर्हव्यान्यक्रमीत् ॥ दध
द्रत्नानि दाशुषे ॥ इति पञ्च रत्नानि ॥ १० ॥ हिरण्यगर्भः स० इति

प्र० हिरण्यम् ॥ ११ ॥ सुजातोज्योतिषासहशर्म्मव्वरूथमासदत्स्वः ॥ प्र०
२२ व्वासो ऽअग्नेव्विश्वरूप ꣳ संव्ययस्वव्विभावसो॥ इति युग्मवस्त्रेण
कलशं वेष्टयेत् ॥ १२ ॥ ॐ पूर्णादर्व्विपरापतसुपूर्णापुनरापत ॥
व्वस्नेवविक्क्रीणावहा ऽइषमूर्जꣳ शतक्रतो ॥ इति पूर्णपात्रमुपरि
न्यसेत् ॥ १३ ॥ याः फलिनीरिति कलशोपरि नारिकेलफलं संस्थाप्य ।
ॐ तत्वायामि ब्रह्मणाव्वन्दमानस्तदाशास्तेयजमानोहविर्भिः २२
अहेडमानो व्वरुणेहबोध्युरुशꣳस मानऽआयुःप्रमोषीः॥इति॥१४॥

अस्मिन् कलशे वरुणं साङ्गं सपरिवारं सायुधं सशक्तिकमावाह-
यामि॥ ॐ अपांपतये वरुणाय नमः इति पञ्चोपचारैर्वरुणं सम्पूज्य॥
ततो गङ्गाद्यावाहनम्॥ कलाकला हि देवानां दानवानां कलाकलाः॥
सङ्गृह्य निर्मितो यस्मात्कलशस्तेन कथ्यते॥ १ ॥ कलशस्य मुखे
विष्णुः कण्ठे रुद्रः समाश्रितः॥ मूले त्वस्य स्थितो ब्रह्मा मध्ये मातृ-
गणाः स्मृताः॥ २॥ कुक्षौ तु सागराः सप्त सप्तद्वीपा च मेदिनी।
अर्जुनी गोमती चैव चन्द्रभागा सरस्वती॥ ३ ॥ कावेरी कृष्णवेणी

टि० १ गंधः पुष्पो धूपदीपौ नैवेद्येति पंचकः॥ पञ्चोपचारमाख्यातं पूजयेत्तत्त्वविद्बुधः॥ १॥

प्र० च गङ्गा चैव महानदी ॥ तापी गोदावरी चैव माहेन्द्री नर्मदा तथा प्र०
॥ ४ ॥ नदाश्च विविधा जाता नद्यः सर्वास्तथापराः ॥ पृथिव्यां
२३, यानि तीर्थानि कलशस्थानि तानि वै ॥ ५ ॥ सर्वे समुद्राः सरितस्ती-
र्थानि जलदा नदाः ॥ आयान्तु मम शांत्यर्थं दुरितक्षयकारकाः ॥ ६ ॥
ऋग्वेदोऽथ यजुर्वेदः सामवेदो ह्यथर्वणः ॥ अङ्गैश्च सहिताः सर्वे कलशं
तु समाश्रिताः ॥ ७ ॥ अत्र गायत्री सावित्री शान्तिः पुष्टिकरी तथा ॥ २२
आयान्तु मम शान्त्यर्थं दुरितक्षयकारकाः ॥ ८ ॥ यजमानः स्वहस्ते

अक्षतान् गृहीत्वा॥ॐ मनोजूतिर्जु० तिष्ठ॥ कलशे वरुणाद्यावाहित-
देवताः सुप्रतिष्ठिताः वरदाः भवन्तु॥ॐ वरुणाद्यावाहितदेवताभ्यो
नमः॥ विष्णवाद्यावाहितदेवताभ्यो नम इति वा॥ आसनार्थे अक्ष-
तान् समर्पयामि ॥ पादयोः पाद्यं स० ॥ हस्तयोः अर्घ्यं स० ॥
आचमनं स०॥ पञ्चामृतस्नानं स०॥ शुद्धोदकस्नानं स० ॥ स्ना-
नाङ्गाचमनं स० ॥ वस्त्रं स० ॥ आचमनं स० ॥ यज्ञोपवीतं स०॥
आचमनं स०॥उपवस्त्रं स० ॥ आचमनं स०॥ गन्धं स०॥ अक्ष-

प्र० तान्स० ॥ पुष्पमालां स० ॥ नानापरिमलद्रव्याणि स० ॥ धूपं आ० ॥ प्र०
दीपं द० ॥ हस्तप्रक्षालनम् ॥ नैवेद्यं स० ॥ ताम्बूलं स० ॥ पूगीफलं
२४ स० ॥ कृतायाः पूजायाः साद्गुण्यार्थं द्रव्यदक्षिणां स० ॥ आर्तिक्यं
स० ॥ मन्त्रपुष्पाञ्जलिं स० ॥ प्रदक्षिणां स० ॥ नमस्कारं स० ॥ अनया
पूजया वरुणाद्यावाहितदेवताः प्रीयन्तां न मम ॥ पूर्वोक्तमंत्रेण
पूजनं ॥ * अथ प्रार्थना * देवदानवसंवाधे मथ्यमाने महोदधौ ॥ २५
उत्पन्नोऽसि तदा कुम्भ विधृतो विष्णुना स्वयम् ॥१॥ त्वत्तोये सर्वे

तीर्थानि देवाः सर्वे त्वयि स्थिताः॥ त्वयि तिष्ठन्ति भूतानि त्वयि
प्राणाः प्रतिष्ठिताः ॥२॥ शिवः स्वयं त्वमेवासि विष्णुस्त्वं च प्रजा-
पतिः। आदित्या वसवो रुद्राः विश्वेदेवाः सपैतृकाः ॥३॥ त्वयि
तिष्ठन्ति सर्वेऽपि यतः कामफलप्रदाः॥ त्वत्प्रसादादिमं यज्ञं कर्तुमीहे
जलोद्भव॥ सान्निध्यं कुरु मे देव प्रसन्नो भव सर्वदा॥४॥ नमो नम-
स्ते स्फटिकप्रभाय सुश्वेतहाराय सुमङ्गलाय ॥ सुपाशहस्ताय झषा-
सनाय जलाधिनाथाय नमो नमस्ते॥ ५ ॥ पाशपाणे नमस्तुभ्यं

प्र० पद्मिनीजीवनायक ॥ पुण्याहवाचनं यावत्तावत्त्वं सन्निधो भव ॥६॥ प्र०

* इति कलशप्रार्थना *

२५ * अथ पुण्याहवाचनम् * अवनिकृतजानुमण्डलः कम-
लमुकुलसदृशमञ्जलिं शिरस्याधायानन्तरं दक्षिणेन पाणिना स्वर्ण-
पूर्णकलशं धारयित्वा आशिषः प्रार्थयेत् ॥७॥ यजमानः-दीर्घा नागा
नद्यो गिरयस्त्रीणि विष्णुपदानि च ॥ तेनायुःप्रमाणेन पुण्यं पुण्याहं २५
दीर्घमायुरस्तु ॥ विप्राः-अस्तु दीर्घमायुः ॥ ॐ त्रीणि पदाविचक्रमे

विष्णुर्गोपाऽअदाभ्य ६ ॥ अतोधर्म्माणिधारयन् ॥१॥ तेनायुःप्रमा-
णेन पुण्यं पुण्याहं दीर्घमायुरस्तु इति भवन्तो ब्रुवन्तु इति यज-
मानः ॥ २ ॥ पुण्यं पुण्याहं दीर्घमायुरास्त्विति द्विजाः ॥ एवं द्विरपरं
शिरसि भूमौ निधाय ॥ ब्राह्मणानां हस्ते ॐ शिवा आपः सन्तु जलं[1]-
मिति यजमानः ॥ सन्तु शिवा आप इति ब्राह्मणाः । एवं सर्वत्र वचनो-
त्तरं दद्युः ॥ ३ ॥ यज० सौमनस्यमस्तु इति पुष्पं[2]म् ॥ वि० अस्तु

१ टि० अपां मध्ये स्थिता देवाः सर्वमप्सु प्रतिष्ठितम् ॥ ब्राह्मणानां करे न्यस्ताः शिवा आपो भवन्तु ते ।
२ टि० लक्ष्मीर्वसति पुष्पेषु लक्ष्मीर्वसति पुष्करे । सा मे वसतु वै नित्यं सौमनस्यं तथास्तु नः ॥

प्र० सौमनस्यम् ॥ यज० [1]अक्षतं चारिष्टं चास्तु इत्यक्षतान् ॥ विप्राः-अस्त्व- प्र०
क्षतमरिष्टञ्च ॥ यज० गन्धाः पान्तु इति गन्धम् ॥ विप्राः-सुम-
२६ ङ्गल्यं चास्तु ॥ यज० अक्षताः पान्तु ॥ विप्राः-आयुष्यमस्तु ॥ यज०
पुष्पाणि पान्तु ॥ विप्राः-सौश्रीयमस्तु ॥ यज० सफलताम्बूलानि पान्तु ॥
विप्राः-ऐश्वर्यमस्तु ॥ यज० दक्षिणाः पान्तु ॥ विप्राः-बहुदेयं चास्तु ॥
यज० पुनरत्रापः पान्तु ॥ वि० स्वर्चितमस्तु ॥ यज० दीर्घमायुः शान्तिः
पुष्टिस्तुष्टिः श्रीर्यशो विद्या विनयो वित्तं बहुपुत्रं बहुधनं चायुष्यं २६

१ टि० अक्षतं चास्तु मे पुण्यं दीर्घमायुर्यशोबलम् । यद्यच्छ्रेयस्करं लोके तत्तदस्तु सदा मम ॥

चास्तु ॥ विप्राः-तथास्तु ॥ यज० यं कृत्वा सर्ववेदयज्ञक्रियाकरणक र्मारम्भाः शुभाः शोभनाः प्रवर्तन्ते तमहमोङ्कारमादिं कृत्वा ऋग्यजुःसामाथर्वाशीर्वचनं बहुऋषिमतं समनुज्ञातं भवद्भिरनुज्ञातं पुण्यं पुण्याहं वाचयिष्ये ॥ विप्राः-वाच्यताम् ॥ करोतु स्वस्ति ते ब्रह्मा स्वस्ति चापि द्विजातयः ॥ सरीसृपाश्च ये श्रेष्ठास्तेभ्यस्ते स्वस्ति सर्वदा ॥ १ ॥ ययातिर्नहुषश्चैव धुन्धुमारो भगीरथः ॥ तुभ्यं राजर्षयः सर्वे स्वस्ति कुर्वन्तु नित्यशः ॥ २ ॥

प्र० स्वस्ति तेऽस्तु द्विपादेभ्यश्चतुष्पादेभ्य एव च॥ स्वस्त्यस्त्वपाद- प्र०
केभ्यश्च सर्वेभ्यः स्वस्ति ते सदा ॥ ३ ॥ स्वाहा स्वधा शची
२७ चैव स्वस्ति कुर्वन्तु ते सदा ॥ करोतु स्वस्ति वेदादिर्नित्यं तव महा-
मखे ॥ ४ ॥ लक्ष्मीररुन्धती चैव कुरुतां स्वस्ति तेऽनघ ॥ असितो
देवलश्चैव विश्वामित्रस्तथाङ्गिराः ॥ ५ ॥ वशिष्ठः कश्यपश्चैव स्वस्ति
कुर्वन्तु ते सदा ॥ धाता विधाता लोकेशो दिशश्च सदिगीश्वराः ॥ ६ ॥ २७
स्वस्ति तेऽद्य प्रयच्छन्तु कार्त्तिकेयश्च षण्मुखः ॥ विवस्वान्भगवा-

न्स्वस्ति करोतु तव सर्वदा ॥ ७ ॥ दिग्गजाश्चैव चत्वारः क्षितिश्च
गगनं ग्रहाः ॥ अधस्ताद्धरणीं चासौ नागो धारयते हि यः ॥ ८ ॥
शेषश्च पन्नगश्रेष्ठः स्वस्ति तुभ्यं प्रयच्छतु ॥ ॐ द्रविणोदाः पिपीष-
तिजुहोतप्रचतिष्ठत ॥ नेष्ट्रादृतुभिरिष्यत ॥ १ ॥ सविता त्वा सवाना ँ
सुवतामग्निर्गृहपतीना ँ सोमो वनस्पतीनाम् ॥ बृहस्पतिर्वाचऽइ-
न्द्रोज्यैष्ठ्याय रुद्रः पशुभ्यो मित्रः सत्यो वरुणो धर्म्मपतीनाम् ॥ २ ॥
नतद्रक्षा ँ सि न पिशाचास्तरन्ति देवानामोजः प्रथमज ँ ह्येतत् ॥

प्र० योविभर्तिदाक्षायणꣳ० हिरण्यꣳ० सदेवेषु कृणुते दीर्घमायुःसम- प्र०
नुष्येषुकृणुतेदीर्घमायुः॥ ३ ॥ उच्चातेजातमन्धसोदिविसद्भूम्या-
२८ ददे॥उग्रꣳ० शर्म्ममहिश्रवः ॥४॥उपास्मैगायतानरः पवमाना
येन्दवे॥अभिदेवाँ २॥ ऽइयक्षते॥५॥इत्येता ऋचः पुण्याहे ब्रूयात्॥
व्रतजपनियमतपः स्वाध्यायक्रतुशमदमदयादानविशिष्टानां
सर्वेषां ब्राह्मणानां मनः समाधीयताम् इति यज०॥ समाहितमनसः २८
स्मः इति ब्रा०॥ प्रसीदन्तु भवन्तः इति यज०॥ प्रसन्नाः स्मः इति

ब्रा० ॥ततो यजमानो ब्रूयात् शान्तिरस्त्वित्यादि॥अस्त्विति द्विजाः॥
प्रतिवचनं सर्वत्र दद्युः ॥ ॐ शान्तिरस्तु ॥ॐ पुष्टिरस्तु ॥ ॐ तुष्टि
रस्तु ॥ ॐ वृद्धिरस्तु ॥ ॐ अविघ्नमस्तु ॥ ॐ आयुष्यमस्तु॥ ॐ
आरोग्यमस्तु॥ॐ शिवमस्तु॥ॐ शिवं कर्मास्तु ॥ ॐ कर्मसमृद्धि-
रस्तु॥ॐ धर्मसमृद्धिरस्तु॥ॐ वेदसमृद्धिरस्तु ॥ ॐ शास्त्रसमृद्धि-
रस्तु॥ॐ धनधान्यसमृद्धिरस्तु॥ॐ पुत्रपौत्रसमृद्धिरस्तु॥ॐ इष्ट-
सम्पदस्तु ॥ बहिः ॥ ॐ अरिष्टनिरसनमस्तु॥ॐ यत्पापं रोगमशुभ

प्र० मकल्याणं तद्दूरे प्रतिहतमस्तु ॥ अन्तः॥ ॐ यच्छ्रेयस्तदस्तु॥ ॐ प्र०
उत्तरे कर्मणि निर्विघ्नमस्तु ॥ ॐ उत्तरोत्तरमहरहरभिवृद्धिरस्तु ॥
२१ ॐ उत्तरोत्तराः क्रियाः शुभाः शोभनाः सम्पद्यन्ताम्।ॐ तिथिकरण-
मुहूर्तनक्षत्रग्रहलग्नसम्पदस्तु ॥ ॐ तिथिकरणमुहूर्त्तनक्षत्रग्रहल-
ग्नाधिदेवताः प्रीयन्ताम् ॥ॐ तिथिकरणे समुहूर्ते सनक्षत्रे सग्रहे
सलग्ने साधिदैवते प्रीयेताम्॥ॐ दुर्गापाञ्चाल्यौ प्रीयेताम्॥ॐ अग्नि- २६
पुरोगाः विश्वेदेवाः प्रीयन्ताम्। ॐ इन्द्रपुरोगाः मरुद्गणाः प्रीय-

न्ताम् ॥ ॐ वसिष्ठपुरोगाः ऋषिगणाः प्रीयन्ताम् ॥ ॐ माहेश्वरी
पुरोगाः उमामातरः प्रीयन्ताम् ॥ ॐ अरुन्धतीपुरोगा एकपत्न्यः
प्रीयन्ताम् ॥ ॐ विष्णुपुरोगाःसर्वे देवाः प्रीयन्ताम् ॥ ॐ ब्रह्मपुरोगाः
सर्वे वेदाःप्रीयन्ताम् ॥ ब्रह्म च ब्राह्मणाश्च प्रीयन्ताम् ॥ ॐ श्रीसरस्वत्यौ
प्रीयेताम् ॥ ॐ श्रद्धामेधे प्रीयेताम् ॥ ॐ भगवती कात्यायनी प्रीयताम्
ॐ भगवती माहेश्वरी प्रीयताम् ॥ ॐ भगवती ऋद्धिकरी प्रीयताम् ॥
ॐ भगवती वृद्धिकरी प्रीयताम् ॥ ॐ भगवती पुष्टिकरी प्रीयताम् ॥

प्र० ॐ भगवती तुष्टिकरी प्रीयताम् ॐ भगवन्तौ विघ्नविनायकौ प्रीये- प्र०
ताम् ॥ ॐ सर्वाः कुलदेवताः प्रीयन्ताम् ॥ ॐ सर्वाः ग्रामदेवताः
उ० प्रीयन्ताम् ॥ ॐ सर्वाःइष्टदेवताः प्रीयन्ताम् ॥ बहिः ॐ हताश्च
ब्रह्मद्विषः॥ॐ हताश्च परिपन्थिनः॥ॐहताश्च विघ्नकर्त्तारः ॐ
शत्रवःपराभवं यान्तु॥ॐशाम्यन्तु घोराणि॥ॐशाम्यन्तु पापानि॥
ॐ शाम्यन्त्वीतयः॥ ॐ शाम्यन्तूपद्रवाः ॥ अन्तः ॐ शुभानि
वर्धन्ताम् ॥ ॐ शिवा आपः सन्तु॥ ॐ शिवा ऋतवः सन्तु ॐ
उ०

शिवा ओषधयः सन्तु ॥ ॐ शिवा वनस्पतयः सन्तु ॥ ॐ शिवा अतिथयः सन्तु ॥ ॐ शिवा अग्नयः सन्तु॥ शिवा आहुतयः सन्तु॥ ॐ अहोरात्रे शिवे स्याताम् ॥ ॐ निकामेनिकामे नः पर्जन्यो वर्षतु फलवत्यो नऽओषधयः पच्यन्तां योगक्षेमो नः कल्पताम् ॥ १ ॥ ॐ शुक्राङ्गारकबुधबृहस्पतिशनैश्चरराहुकेतुसोमसहितादित्यपुरोगाः सर्वे ग्रहाः प्रीयन्ताम् ॥ ॐ भगवान्नारायणः प्रीयताम् ॥ ॐ भगवान्पर्जन्यः प्रीयताम् ॥ ॐ भगवान्स्वामी महासेनः प्रीयताम् ।

प्र० पुरोनुवाक्यया यत्पुण्यं तदस्तु ॥ याज्यया यत्पुण्यं तदस्तु ॥ वष- प्र०
ट्कारेण यत्पुण्यं तदस्तु ॥ प्रातः सूर्योदये यत्पुण्यं तदस्तु ॥ एत-
३१ त्कल्याणयुक्तं पुण्यं पुण्याहं वाचयिष्ये इति यजमानः ॥ॐ वाच्य-
तामिति ब्राह्मणाः ॥ ॐ ब्राह्मं पुण्यमहर्य्यच्च सृष्ट्युत्पादनकारकम्॥
वेदवृक्षोद्भवं नित्यं तत्पुण्याहं ब्रुवन्तु नः ॥ भो ब्राह्मणाः मया क्रियमा
णस्य अमुकाख्यस्य कर्मणः पुण्याहं भवन्तो ब्रुवन्तु इति यज० ॥ॐ
पुण्याहं ब्रा० ॐ अस्य कर्मणः पुण्याऽहं भवन्तो ब्रुवन्तु इति यज० ॥ ३१

पुण्याहं इति ब्रा० ॥ एवं वचनं प्रतिवचनं च त्रिः पठित्वा ॥ ॐ पुनन्तु मादेवजनाऽ पुनन्तुमनसाधियः ॥ पुनन्तुविश्वा भूतानि-जातवेदःपुनीहिमा ॥ पृथिव्यामुद्धृतायां तु यत्कल्याणं पुराकृतम् ॥ ऋषिभिः सिद्धगन्धर्वैस्तत्कल्याणं ब्रुवन्तु नः ॥ भो ब्राह्मणाः मया क्रियमाणस्य अमुकाख्यस्य कर्मणः कल्याणं भवन्तो ब्रुवन्तु ३ ॥ ॐ कल्याणम् ३ ॥ ॐ यथेमांवाचंकल्याणीमावदानिजनेभ्यः ॥ ब्रह्मराजन्याभ्याऽ शूद्रायचार्यायचस्वायचारणायच ॥ प्रियोदे-

प्र० वानांदक्षिणायैदातुरिहभूयासमयम्मेकामः समृद्धयतामुपमादोनं प्र०
मतु ॥ २ ॥ सागरस्य तु या ऋद्धिर्महालक्ष्म्यादिभिः कृता॥ सम्पूर्णा
३२ सुप्रभावा च तामृद्धिं प्रब्रुवन्तु नः॥ भो ब्राह्मणाः कर्मणः ऋद्धिं भवन्तो
ब्रुवन्तु ३॥ ॐ कर्म ऋध्यताम् ३॥ ॐ सत्रस्यऋद्धिरस्यगन्मज्योति
रमृताऽअभूम ॥ दिवं पृथिव्याऽअध्यारुहामाविदामदेवान्त्स्व
र्ज्योतिः॥ ३ ॥ स्वस्तिस्तु या विनाशाख्या पुण्यकल्याणवृद्धिदा ॥ ३२
विनायकप्रिया नित्यं तां च स्वस्तिं ब्रुवन्तु नः ॥ भो ब्राह्मणाः कर्मणे

स्वस्ति भवन्तो ब्रुवन्तु ३ ॥ ॐ आयुष्मते स्वस्ति ३॥ अस्मै कर्मणे स्वस्ति भवन्तो ब्रुवन्तु इति यज०॥आयुष्मते स्वस्ति ३ इति ब्रा०॥ ॐ स्वस्तिनऽइन्द्रो वृद्धश्रवाः स्वस्तिनः पूषाविश्ववेदाः ॥ स्वस्ति-नस्तार्क्ष्योऽअरिष्टनेमिः स्वस्तिनोबृहस्पतिर्दधातु ॥ ४ ॥ समुद्र-मथनाज्जाता जगदानन्दकारिका ॥ हरिप्रिया च माङ्गल्या तां श्रियं च ब्रुवन्तु नः ॥ भो ब्राह्म० कर्मणः श्रीरस्त्विति भवन्तो ब्रुवन्तु ३ ॥ ॐ अस्तु श्रीः ३ ॐ श्रीश्चतेलक्ष्मीश्चपत्न्यांवहोरा-

प्र० त्रेपार्श्वेनक्षत्राणिरूपमश्विनौव्यात्तम् ॥ इष्णन्निषाणामुम्मंऽइषाण प्र०
सर्व्वलोकम्मंऽइषाण ॥ ५ ॥ मृकण्डसूनोरायुर्यद्वलोमशयोस्तथा॥
३२ आयुषा तेन संयुक्ता जीवेम शरदः शतम् ॥ इति यजमानः ॥ शतं जीव-
न्तु भवन्तः इति ब्रा० ॥ १ ॥ ॐ शतमिन्नुशरदोऽअन्तिदेवायत्रानश्च
क्राजरसंतनूनाम् ॥ पुत्रासोयत्रपितरोभवन्तिमानोमध्यारीरिष-
तायुर्गन्तोः ॥ शिवगौरीविवाहे या या श्रीरामे नृपात्मजे ॥ धन- ३२
दस्य गृहे या श्रीरस्माकं सास्तु सद्मनि इति यजमानः ॥ ॐ अ-

स्तु श्रीः इति ब्राह्मणाः ॥१॥ ॐ मनस ँ काममाकूतिंवाच ऽ
सत्यमशीय ॥ पशूना ँ रूपमन्नस्यरसोयशः ँ श्री ऽ श्रयतां
मयिस्वाहा॥प्रजापतिर्लोकपालो धाता ब्रह्मा च देवराट्॥भगवाञ्छा-
श्वतो नित्यं नो वै रक्षतु सर्वतः॥ ॐ भगवान्प्रजापतिः प्रीयताम १॥ ॐ
प्रजापतेनत्वदेतान्यन्योविश्वारूपाणिपरिताबभूव॥यत्कामास्तेजु
हुमस्तन्नोऽअस्त्वयममुष्यंपितासावस्यापिताव्वय ँ स्यामपतयोर-
यीणा ँ स्वाहा ॥ आयुष्मते स्वस्तिमते यजमानाय दाशुषे॥श्रियै

प्र० दत्ताशिषः सन्तु ऋत्विग्भिर्वेदपारगैः इति यजमानः॥ ॐ आयुष्मते प्र०
स्वस्ति इति ब्राह्मणाः॥ १॥ ॐ प्रातिपन्थामपद्माहिस्वस्तिगामनेहसम्॥
३४ येनविश्वाः परिद्विषोवृणक्तिविन्दतेवसु॥ ॐ स्वस्तिवाचनसमृद्धि-
रस्तु॥ कृतस्य स्वस्तिवाचनकर्मणः समृद्ध्यर्थं स्वस्तिवाचकेभ्यो
ब्राह्मणेभ्यः इमां दक्षिणां विभज्य दातुमहमुत्सृजे॥ अथाभिषेकः॥
अभिषेके पत्नी वामतः एकस्मिन्पात्रे वरुणोदकं गृहीत्वाऽविधुरा- ३४
श्चत्वारो ब्राह्मणाः दूर्वाऽम्रपल्लवैः सकुटुम्बं यजमानमभिषिञ्चेयुः।

तन्मन्त्राः ॐ पयः पृथिव्या० ॥१॥ ॐ पंचनद्यः ॥२॥ ॐ वरुण-
स्यो०॥३॥ ॐ पुनन्तुमा० ॥४॥ ॐ देवस्यंत्वासवितुः प्रसवेऽश्विनो
र्बाहुभ्यांपूष्णोहस्ताभ्याम् ॥ सरस्वत्यैव्वाचोयन्तुर्यंत्रियें दधामि-
बृहस्पतेष्ट्वासाम्राज्येनाभिषिंञ्चाम्यसौ ॥५॥ देवस्यंत्वा० ॥ सरस्व
त्यैव्वाचोयन्तुर्यंत्रेणाग्नेः साम्राज्येनाभिषिञ्चामि ॥ ६ ॥ देव-
स्यंत्वा०॥ अश्विनोर्भैषज्येनतेजसेब्रह्मवर्चसायाभिषिञ्चामिसरस्व
त्यैभैषज्येनव्वीर्यायान्नाद्यायाभिषिंचामीन्द्रस्येन्द्रियेणबलायश्रि

यैयशसेऽभिषिञ्चामि॥७॥ॐविश्वानिदेवसवितर्दुरितानिपरासुव॥ यद्भद्रन्तन्नऽआसुव ॥ ८ ॥ धामच्छदग्निरिन्द्रोब्रह्मादेवोबृह-स्पतिः ॥ सचेतसोविश्वेदेवायज्ञंप्रावन्तुनः शुभे ॥९ ॥ त्वंयविष्ठ-दाशुषोनॄंःपाहिशृणुधीगिरः ॥ रक्षातोकमुतत्मना ॥ १० ॥अन्न-पतेन्नस्यनोदेह्यनमीवस्यशुष्मिणः । प्रप्रदातारन्तारिषऽऊर्ज्जन्नो-धेहिद्विपदेचतुष्पदे॥ ११ ॥ द्यौः शान्तिरन्त० ॥१२॥ यतोयतः स० ॥ १३ ॥अमृताभिषेकोऽस्तु इति ॥इतिपुण्याहवाचनप्रयोगः॥

# * अथविघ्नपूजनम् *

अविघ्नो मण्डपश्चैव मातृणां पूजनं सकृत् ॥ वैश्वदेवं वसोर्द्धारा नान्दीश्राद्धमतःपरम्॥ विवाहोपनयनचूडाकरणसीमन्तोन्नयनादौ॥ मोदश्चैव प्रमोदश्च सुमुखो दुर्मुखस्तथा ॥ अविघ्नो विघ्नहर्त्ता च षडेते विघ्नविनायकाः। ॐ मोदाय नमःमोदं आ० ।ॐ प्रमोदाय० प्रमोदं आ० ।ॐ सुमुखाय० सुमुखं आ० ।ॐ दुर्मुखाय० दुर्मुखं आ० । ॐ अविघ्नाय० अविघ्नं आ० । ॐ विघ्नहर्त्रे० विघ्नहर्तारं० । ॐ

प्र० मोदादिषड्विनायकेभ्यो नमः इति पूजयेत् ॥ इति अविघ्नपूजनम् ॥ प्र०

* अथ मण्डपदेवताप्रतिष्ठा *

३६ ततो मण्डपार्थं स्तम्भारोपणम् । तद्यथा ॐ देवस्य-
त्वास० भ्यां इत्यभ्रिमादत्ते । ॐ इदमहर्ठं० रक्षासांग्रीवाऽ
अपिंकृन्तामि । इत्यवटं परिलिखति । ॐ मावो रिषत्खनि-
तायंस्मैचाहंखनांमिवः ॥ द्विपाच्चतुष्पादस्माकर्ठं० सर्वमस्त्वना ३६
तुरम् ॥ इति खनाति । ॐ सिञ्चंतिपरिषिंचंत्युत्सिंचातिपुनन्ति च ॥

सुरायैबभ्रैमदैकिन्त्वोव्वंदातिकिंत्व ऽ ॥ इति तस्मिन्नवटे अप आसि-
ञ्चति ॥ ॐ यवोसि यवयास्मद्द्वेषोयवयारातीः ॥ इति यवानाव-
पति ॥ दर्भसिद्धार्थकांस्तूष्णीमावपति॥ॐ कांडात्कां० शतेन च
इति दूर्वाङ्कुरान्। ॐ दधिक्राव्णो० करत् इति दधि॥ॐ याः फलि-
नी० हसः इति फलम्। ॐ हिरण्यगर्भः० व्विधेम इति हिरण्यं चाव-
पति। ॐ उच्छ्रयस्वव्वनस्पत ऽऊर्ध्वोमांपाह्य ६ हंसऽआस्ययज्ञ
स्योदृचः।इति मन्त्रेण रक्तसूत्रबद्धमदनफलसमन्वितस्तम्भोत्था-

पनम् । ॐ ऊर्ध्वऽऊषुणऽऊतये तिष्ठा देवोनसंविता ॥ ऊर्द्ध्वोवाजस्य
सनिताऽदांजिभिर्व्वाघाद्भिर्व्विह्वयामहे ॥ इत्यवटे रोपणम् ॥ ॐ स्थिरो
भवव्वीड्वङ्गऽआशुर्भवव्वाज्यर्वन् ॥ पृथुर्भवसुषदस्त्वमग्नेः पुरी
षवाहणः ॥ इति समन्ततो मृत्पूर्णेन स्थिरीकरणम् ॥ एवं सर्वान्स्त-
म्भान्स्थिरीकृत्य ॥ सर्वेषु स्तम्भेषु रोपणक्रमेणैकैकं देवतामावाहयेत् ।
तद्यथा ॥ ॐ नलिन्यै नमः नलिनीमा० । ॐ नन्दिन्यै० नंदिनीमा० ।
ॐ मैत्रायै० मैत्रामा० । ॐ उमायै० उमामा० ॥ ॐ पशुवर्द्धिन्यै०

पशुवर्द्धिनी० । ॐ मनो जू० प्रतिष्ठा । मण्डपदेवताः सुप्रतिष्ठिताः वरदा भवन्तु इति प्रतिष्ठाप्य॥ ॐ मण्डपदेवताभ्यो नमः इति षोडशोपचारैरभ्यर्चनम्। मण्डपदेवताप्रीत्यर्थं यथाशक्ति ब्राह्मणान्भोजयिष्ये ॥ अत्र शिष्टाचार एव शरणम्। मण्डपप्रतिष्ठा तु सीमन्तोन्नयनान्नप्राशनचूडाकरणोपनयनवेदारम्भकेशान्तव्रतविसर्गविवाहेषु कार्या ॥ तत्रैव मण्डपार्थं स्तम्भनिवेशनं तु ॥ वृषाद्राशित्रये सूर्ये सति आग्नेय्यां कार्यम्। सिंहाद्राशित्रये ईशान्यां ॥ वृश्चिकाद्राशित्रये

प्र० वायव्याम् ॥ कुम्भाद्राशित्रये नैर्ऋत्याम् ॥ इति मण्डपदेवताप्रतिष्ठा ॥ प्र०

## * अथ मातृकापूजनम् *

३८ अथाग्नेय्यां प्रतिमास्वक्षतपुञ्जेषु वा प्राक्संस्थमुदक्संस्थं वा मातृस्थापनम् ॥ तद्यथा ॥ समीपे मातृवर्गस्य सर्वविघ्नहरं सदा ॥ त्रैलोक्यवन्दितं देवं गणेशं स्थापयाम्यहम् ॥ ॐ गणानान्त्वा० । ॐ भूर्भुवः स्वः गणपतये० गणपतिमावाहयामि स्थापयामि ॥ १ ॥ हेमाद्रितनयां देवीं वरदां शङ्करप्रियाम् ॥ लम्बोदरस्य जननीं गौरीमा- ३८

वाहयाम्यहम् ॥ ॐ आयङ्गौ ꣳ पृश्निरक्रमीदसंदन्मातरंम्प्रपुरः ॥
पितरंञ्च प्रयँत्स्वं ÷ ॥ ॐ भूर्भुवः स्वः गौर्यै न० गौरीमावाह० ॥२॥
पद्माभां पद्मवदनां पद्मनाभोरुसंस्थिताम् ॥ जगत्प्रियां पद्मवासां
पद्मामावाहयाम्यहम् ॥ ॐ हिरंण्यरूपाऽउषसौ व्विरोकऽउभाविन्द्रा-
ऽउदिंथ ꣳ सूर्य्यश्च ॥ आरोहतं वरुणमित्रगर्त्तुन्ततंश्चक्षाथामदिं
तिन्दितिंञ्च । मित्रोसि व्वरुणोसि ॥ ॐ पद्मायै० पद्मामा० ॥ ३ ॥
दिव्यरूपां विशालाक्षीं शुचिकुण्डलधारिणीम् ॥ रक्तमुक्ताद्यलङ्कारां

प्र० शचीमावाहयाम्यहम् ॥ ॐ निवेशनꣳ सङ्गमंनोव्वसूनांव्विश्वारूपा-
भिचष्टेशचीभिꣳ ॥ देवऽइवसवितासत्यधर्म्मेन्द्रोनतस्थौसमरेप प्र०
३१ थीनाम् ॥ ॐ शच्यै० शचीमा० ॥ ४ ॥ विश्वेऽस्मिन् भूरिवरदां
जरां निर्जरसेविताम् ॥ बुद्धिप्रबोधिनीं सौम्यां मेधामावाहयाम्य-
हम् ॥ ॐ मेधाम्मेव्वरुणोददातुमेधामग्निः प्रजापतिꣳ॥मेधामि-
न्द्रश्चव्वायुश्चमेधान्धाताददातुमेस्वाहा॥ॐ मेधायै० मेधामा०॥५॥
जगत्सृष्टिकरीं धात्रीं देवीं प्रणवमातृकाम् ॥ वेदगर्भां यज्ञमयीं ३१

सावित्रीं स्थापयाम्यहम् ॐ सवितात्वा सवानां ॳं सुवतामग्नि-
र्गृहपतीनां ॳं सोमोव्वनस्पतीनाम् ॥ बृहस्पतिर्व्वाचऽइन्द्रोज्यै-
ष्ठ्यायरुद्र ऽ पशुभ्योमित्रऽ सत्योव्वरुणोधर्म्मपतीनाम॥ ॐ सावि-
त्र्यै० सावित्रीमा० ॥६॥ सर्वास्त्रधारिणीं देवीं सर्वाभरणभूषिताम्॥ सर्व-
देवस्तुतां वन्द्यां विजयां स्थापयाम्यहम् ॥ ॐ व्विज्ज्यन्धनुः कप-
र्दिनोव्विशल्योवाणवाँ२॥ ऽउत॥ अनेशन्नस्ययाऽइषवऽआभुरस्य-
निषङ्गधिः ॐ विजयायै० विजया० ॥७॥ सुरारिमथिनीं देवीं

प्र० देवानामभयप्रदाम्॥ त्रैलोक्यवंदितां शुभ्रां जयामावाहयाम्यहम् ॥ प्र०

४० ॐ बह्वीनाम्पिताब्बहुरस्य पुत्राश्शिचश्श्चाकृणोतिसमनावगत्य ॥
इषुधिःऽसङ्काःपृतनाश्चसर्व्वाः पृष्ठेनिनद्धोजयतिप्प्रसूतः।ॐजया-
ये जयामा० ॥८॥ मयूरवाहनां देवीं खड्गशक्तिधनुर्धराम्॥ आवाहये-
द्देवसेनां तारकासुरमर्द्दिनीम्॥ ॐ इन्द्रऽआसान्नेताबृहस्पतिर्द्दक्षि-
णा यज्ञऽपुरएतुसोमः॥ देवसेनानामभिभञ्जतीनाञ्जयन्तीनाम्म-
रुतोयन्त्वग्ग्रम्॥ ॐ देवसेनायै० देवसेनामा० ॥९॥ अग्रजा सर्वदेवा- ४०

नां कव्यार्थं या प्रतिष्ठिता ॥ पितृणां तृप्तिदां देवीं स्वधामावाहयाम्य-
हम् ॥ ॐ पितृभ्यः स्वधायिभ्यः स्वधानमः पितामहेभ्यः स्वधा-
यिभ्यः स्वधानमः प्रपितामहेभ्यः स्वधायिभ्यः स्वधानमः ॥
अक्षन्पितरोमीमदन्तपितरोतीतृपन्त पितरः पितरः शुन्धध्वम् ॥
ॐ स्वधायै० स्वधामा० ॥१०॥ हविर्गृहीत्वा सततं देवेभ्यो या प्रय-
च्छति ॥ तां दिव्यरूपां वरदां स्वाहामावाहम्यहम् ॥ ॐ स्वाहाप्राणे-
भ्यः साधिपतिकेभ्यः ॥ पृथिव्यैस्वाहाग्नयेस्वाहान्तरिक्षायस्वाहा-

१० र्वायवेस्वाहादिवेस्स्वाहासूर्य्यायस्वाहा॥ॐ स्वाहायै० स्वाहास्मा० १०
॥११॥आवाहयाम्यहं मातृः सकला लोकपूजिताः॥ सर्वकल्याणरू-
४१ पिण्यो वरदा दिव्यभूषणाः॥ ॐ आपोऽअस्मान्मातरं ÷ शुन्धयन्तु
घृतेन नो घृतप्व÷ पुनन्तु॥ विश्वर्ठ० हिरिप्रम्प्रवहंन्तिदेवीरुदिदा-
भ्यः शुचिरापूतऽएमि॥ दीक्षातपसोस्तनूरांसितान्त्वांशिवाꣳशग्मा-
म्परिदधेभद्रंवर्णंपुष्यंन्॥ ॐ मातृभ्यो० मातृः०॥१२॥ आवाहयेल्लो- ४१
कमातृर्जयन्तीप्रमुखाः शुभाः॥नानाभीष्टप्रदाः शान्ताः सर्वलोकहि-

तावहाः ॥ ॐ रयिश्चमेरायश्चमेपुष्टञ्चमेपुष्टिश्चमेविभुचमेप्रभुचमे-
पूर्णञ्चमेपूर्णतरञ्चमेकुयवञ्चमेक्षितञ्चमेन्नञ्चमेक्षुच्चमेयज्ञेनकल्प-
न्ताम् ॥ ॐ लोकमातृभ्यो० लोकमातृः० ॥१३॥ सर्वहर्षकरीं देवीं
भक्तानामभयप्रदाम् ॥ हर्षोत्फुल्लास्यकमलां धृतिमावाहयाम्यहम् ॥
ॐ यत्प्रज्ञानमुतचेतोधृतिश्चयज्ज्योतिरन्तरमृतम्प्रजासु ॥ यस्मा-
न्नऋतेकिञ्चनकर्म्मक्रियतेतन्मेमनः शिवसंकल्पमस्तु ॥ ॐ धृत्यै०
धृतिमा० ॥१४॥ पोषयन्तीं जगत्सर्वं स्वदेहप्रभवैर्नवैः ॥ शाकैः फलै-

प्र० जलैरत्नैः पुष्टिमावाहयाम्यहम् ॥ ॐ अङ्गान्न्यात्मन्न्भिषजातद्- प्र०
श्विनात्मानमङ्गैꣳ समंधात्सरस्वती ॥ इन्द्रस्यरूपꣳ० शतमान्-
४२ मायुश्चन्द्रेणज्ज्योतिरमृतन्दधानाꣳ ॥ ॐ पुष्ट्यै० पुष्टि० ॥१५॥
देवैराराधितां देवीं सदा संतोषकारिणीम् ॥ प्रसादसुमुखीं देवीं तुष्टि-
मावाहयाम्यहम् ॥ ॐ जातवेदसे सुनवाम सोममरातीयतो निद-
हातिवेदः ॥ सनः पर्षदतिदुर्गाणि विश्वानावेवसिन्धुन्दुरितात्यग्निः ॥
ॐ तुष्ट्यै० तुष्टि० ॥ १६ ॥ पत्तने नगरे ग्रामे विपिने पर्वते ४२

गृहे ॥ नानाजातिकुलेशानीं दुर्गामावाहयाम्यहम् ॥ ॐ प्राणाय
स्वाहापानायस्वाहा व्यानायस्वाहा चक्षुषेस्वाहाश्रोत्राय स्वाहावा
चेस्वाहा मनसे स्वाहा॥ॐ आत्मनः कुलदेवतायै० आत्मनः कुलदे
वताम्०॥१७॥ॐ मनो० ष्ठ० गौर्याद्याः कुलदेवतान्तमातरो गण-
पतिसहिताः सुप्रतिष्ठिताः वरदाः भवन्तु ॥ गौरी पद्मा शची मेधा
सावित्री विजयाजया॥देवसेना स्वधास्वाहा मातरोलोकमातरः॥१॥
धृतिः पुष्टिस्तथा तुष्टिः आत्मनःकुलदेवताः॥गणेशेनाधिका ह्येता

प्र० वृद्धौ पूज्यास्तु षोडश ॥२॥ ॐ गणपत्यादिकुलदेवतान्तमातृभ्यो प्र०
४३ नमः इत्यभ्यर्चनम् ॥ चूडाकरणोपयनविवाहेषु यथाकुलाचारं
मातृभाण्डस्थापनम् ॥

अथ वसोर्द्धारापूजनम् ॥ आग्नेय्यां भित्तौ कुंकुमादिना विन्दु-
करणेनालंकरणं कृत्वाऽग्रामिमन्त्रं पठन् घृतेन सप्तधाराः प्राक्संस्था
उदक्संस्था वा कुर्यात् ॥ ब्वसोः पवित्रमसि शतधारं ब्वसोः पवित्र- ४३
मसि सहस्रधारम् ॥ देवस्त्वा सविता पुनातु ब्वसोः पवित्रेण शतधारेण

सुप्वा॥ इति मन्त्रेण वसोर्द्धारा: कर्तव्या:॥ॐ कामंधुक्ष इत्येतावता मन्त्रेण धारामर्धभागेन गुडेनैकीकरणम्। प्रतिधारामेकैकदेवतामावाहयेत् ॥ ॐ मनस: काम० ॥ ॐ श्रियै नम: श्रियमा० ॥ १ ॥ ॐ श्रीश्चते लक्ष्मीश्च० ॥ ॐ लक्ष्म्यै न० लक्ष्मीमा० ॥ २ ॥ ॐ भद्रं कर्णेभि:० ॐ धृत्यै० धृतिमा० ॥३॥ ॐ मेधाम्मेवरुणो० ॥ ॐ मेधायै० मेधामा० ॥४॥ ॐ प्राणायस्वाहा० ॥ ॐ स्वाहायै० स्वाहा० ॥ ५ ॥ ॐ आयज्ञौ: ॐ प्रज्ञायै० प्रज्ञा० ॥६॥ ॐ पावु-

प्र० कान॒ः सर॑स्वती॒ व्वाजे॑भि॒र्व्वाजि॑नीवती ॥ य॒ज्ञंव्व॑ष्टु॒धि॒याव्व॑सुः ॥ प्र०
ॐ सरस्वत्यै० सरस्वतीमा० ॥७॥ ॐ श्रीर्लक्ष्मीर्धृतिर्मेधा स्वाहा
४४ प्रज्ञा सरस्वती ॥ माङ्गल्येषु प्रपूज्यन्ते सप्तैता घृतमातरः इति मन्त्रेण
वा ॥ ॐ वसोर्धारादेवताभ्यो नमः इत्यावाह्य ॥ ॐ मनो० वसोर्द्धारा-
देवताः सुप्रतिष्ठिताः वरदाः भवन्तु ॥ सम्पूज्य प्रार्थयेत् ॥ यदङ्ग-
त्वेन भो देव्यः पूजिता विधिमार्गतः ॥ कुर्वन्तु कार्यमखिलं निर्विघ्नेन
क्रतूद्भवम् ॥ अनया पूजया वसोर्द्धारादेवताः प्रीयन्तां० ॥इति वसो- ४४

द्धांराकरणाम् ॥ आयुष्यमन्त्रजपः॥ यदायुष्यं चिरं देवाः सप्तकल्पा
न्तजीविषु ॥ ददुस्तेनायुषा युक्ता जीवेम शरदः शतम् ॥ दीर्घा नागा
नगा नद्योऽनन्ताः सप्तार्णवा दिशः॥ अनन्तेनायुषा तेन जीवेम शरदः
शतम् ॥ सत्यानि पञ्चभूतानि विनाशरहितानि च॥ अविनाश्या-
युषा तद्वज्जीवेम शरदः शतम् ॥ॐ आयुष्यंव्वर्चस्य ठं० रायस्पोष
मौद्भिदम् । इद ठं० हिरण्यंवर्च्चस्वज्जैत्राया विशंतादुमाम् ॥ न तद्र
क्षा ᳪ सि० युः ॥ सदांबध्नंदाक्षायणाहिरंण्य ठं० शतानीकायसुमन

प्र० स्यमाना ६ ॥ तन्म॒ऽआबंध्नामि श॒तशा॑रदा॒यायु॑ष्मान् ज॒रदा॑ष्टि॒र्यथा प्र०

सं॑म् ॥ इत्यायुष्यमन्त्रजपः ॥

४५

## अथ सांकल्पेन विधिना नान्दीश्राद्धप्रयोगः ॥

सं[२]ख्येन सर्व[१]कार्यम् ॥ ऋजव एव कुशास्तिलस्थाने यवा दात

व्याः ॥ ॐ सत्यवसुसंज्ञकाः विश्वेदेवाः नान्दीमुखाः भूर्भुवः स्वः इदं ४५

---

टि० १ भविष्यपुराणे—“पिण्डनिर्वपणं कुर्य्यान्न वा कुर्य्यान्नराधिप ॥ वृद्धिश्राद्धे महाबाहो कुलधर्म्मानवेक्ष्य हि” ॥

टि० २ “अनस्मदृद्धशब्दानामरूपाणामगोत्रिणाम् ॥ अनाम्नामतिलाद्यैश्च नान्दीश्राद्धे च सव्यवत्” ॥

वः पाद्यं पादावनेजनं पादप्रक्षालनं वृद्धिः ॥ ॐ मातृपितामहीप्र
पितामह्यः नान्दीमुख्यः भूर्भुवःस्वः इदं वः पाद्यं पादावनेजनं पाद-
प्रक्षालनं वृद्धिः । ॐ पितृपितामहप्रपितामहाः नान्दीमुखाः
भूर्भुवः स्वः इदं वः पाद्य पादावनेजनं पादप्रक्षालनं वृद्धिः ॥ ॐ
मातामहप्रमातामहवृद्धप्रमातामहाःसपत्नीकाः नान्दीमुखाः भूर्भु-
वः स्वः इदं वः पाद्यं पादावनेजनं पादप्रक्षालनं वृद्धिः ॥

आसनदानम्। सत्यवसुसंज्ञकाःविश्वेदेवाःनान्दीमुखाःभूर्भुवःस्वः

प्र० इमे आसने वो नमोनमः नान्दीश्राद्धेक्षणौ क्रियेतां यथा प्राप्नुवन्तो प्र०
४६ भवन्तःतथाप्राप्नुवामःॐमातृपितामहीप्रपितामह्यः नान्दीमुख्यः
भूर्भुवः स्वःइमे आसने वो नमोनमः नान्दीश्राद्धेक्षणौ क्रियेतां यथा
प्राप्नुवन्त्यो भवन्त्यः तथा प्राप्नुवामः॥ ॐ पितृपितामहप्रपिताम-
हाःनान्दीमुखाः भूर्भुवःस्वःइमे आसने वो नमो नमः नान्दीश्राद्धे-
क्षणौ क्रियेतां यथा प्राप्नुवन्तो भवन्तःतथा प्राप्नुवामः॥ ॐमाता-
महप्रमातामहवृद्धप्रमातामहाः सपत्नीकाः नान्दीमुखाः भूर्भुवः- ४६

स्वः इमे आसने वो नमो नमःनान्दीश्राद्धेक्षणौ क्रियेतां यथा प्राप्नुवन्तो भवन्तः तथा प्राप्नुवाम ः ॥

ततो गन्धादिदानम् ॥ सत्यवसुसंज्ञकाः विश्वेदेवाः नान्दीमुखाः भूर्भुवः स्वःइदं गन्धाद्यर्चनं स्वाहा सम्पद्यतां वृद्धिः॥ ॐ मातृपितामहीप्रपितामह्यः नान्दीमुख्यः भूर्भुवः स्वः इदं गन्धाद्यर्चनं स्वाहा सम्पद्यतां वृद्धिः ॥ ॐ पितृपितामहप्रपितामहाः नान्दीमुखाःभूर्भुवः स्वः इदं गन्धाद्यर्चनं स्वाहा सम्पद्यतां वृद्धिः॥ ॐ मातामहप्रमाता-

प्र० महवृद्धप्रमातामहाः सपत्नीकाः नान्दीमुखाः भूर्भुवः स्वः इदं प्र०
गन्धाद्यर्चनं स्वाहा सम्पद्यतां वृद्धिः॥

४७ भोजननिष्क्रयदानम् ॥ ॐ सत्यवसुसंज्ञकाः विश्वेदेवाः नान्दीमुखाः भूर्भुवः स्वः इदं युग्मब्राह्मणभोजनपर्याप्तामान्ननिष्क्रयभूतं द्रव्यममृतरूपेण स्वाहा सम्पद्यतां वृद्धिः॥ ॐ मातृपितामहीप्रपितामह्यः नान्दीमुख्यः भूर्भुवः स्वः इदं युग्मब्राह्मणभोजनपर्याप्तामान्न- ४७
निष्क्रयभूतं द्रव्यममृतरूपेण स्वाहा सम्पद्यतां वृद्धिः। ॐ पितृपिता-

महप्रपितामहाः नान्दीमुखाः भूर्भुवः स्वः इदं युग्मब्राह्मणभोजनप-
र्याप्तामान्ननिष्क्रयभूतं द्रव्यममृतरूपेण स्वाहा सम्पद्यतां वृद्धिः॥ ॐ
मातामहप्रमातामहवृद्धप्रमातामहाःसपत्नीकाःनान्दीमुखाःभूर्भुवः
स्वः इदं युग्मब्राह्मणभोजनपर्याप्तामान्ननिष्क्रयभूतं द्रव्यममृतरू-
पेण स्वाहा सम्पद्यतां वृद्धिः।

सक्षीरयवमुदकदानम्॥सत्यवसुसंज्ञकाःविश्वेदेवाःनान्दीमुखाः
प्रीयन्ताम्॥मातृपितामहीप्रपितामह्यः नान्दीमुख्यः प्रीयन्ताम् ॥

पितृपितामहप्रपितामहाः नान्दीमुखाः प्रीयन्ताम् । मातामह- प्र०
प्र० प्रमातामहवृद्धप्रमातामहाः सपत्नीकाः नान्दीमुखाः प्रीयन्ताम् ॥
४८ शिवा आपःसन्तु इति जलम् ॥ सौमनस्यमस्तु इति पुष्पम् ॥ अक्षतं
चारिष्टमस्तु इत्यक्षतान् ॥ अघोराःपितरःसन्तु॥इतिपूर्वाग्रांजलधारां
दद्यात् इति समाचारः ॥ केवलपाठमात्रं॥ ततः कृतांजलिः प्रार्थ-
येत् । य० ॐ गोत्रन्नो वर्धतां दातारो नोऽभिवर्धन्तां वेदाः सन्त-
तिरेव च ॥ श्रद्धा च नो मा व्यगमद्बहु देयं च नोऽस्तु । अन्नं च नो बहु ४८

१ टि० ब्रह्माण्डपुराणे— तथाप्त्वर्घ्योदकस्थाने दद्यात्क्षीरयवोदकम् इति ॥

भवेदातिथींश्च लभेमहि ॥ याचितारश्च नः सन्तु मा च याचिष्म कञ्चन ॥ एताः सत्या आशिषः सन्तु ॥ ब्रा० सन्त्वेताः सत्या आशिष इति ॥

दक्षिणादानम् ॥ ॐ सत्यवसुसंज्ञकाः विश्वेदेवाः नान्दीमुखाः भूर्भुवः स्वः कृतस्य नान्दीश्राद्धस्य फलप्रतिष्ठासिद्ध्यर्थं द्रा[1]क्षाम[2]लक-य[3]वमू[4]लनिष्क्रयिणीं दक्षिणां दातुमहमुत्सृजे ॥ ॐ मा[5]तृपितामहीप्रपितामह्यः नान्दीमुख्यः भूर्भुवः स्वः कृतस्य नान्दीश्राद्धस्य फलप्र-

---

टि० १ मुनक्का २ आँवला । ३ यव । ४ अदरखमूल इत्यादि । ५ माता पितामही चैव तथैव प्रपितामही ॥ पिता पितामहश्चैव तथैव प्रपितामहः ॥ मातामहस्तत्पिता च प्रमातामहकादयः । एते भवन्तु सम्प्रीता प्रयच्छन्तु च मङ्गलम् ॥

तिष्ठासिद्ध्यर्थं द्राक्षामलकयवमूलनिष्क्रयिणीं दक्षिणां दातुमहमु-
त्सृजे॥ ॐ पितृपितामहप्रपितामहाः नान्दीमुखाः भूर्भुवःस्वः कृतस्य
नान्दीश्राद्धस्य फलप्रतिष्ठासिद्ध्यर्थं द्राक्षामलकयवमूलनिष्क्रयि-
णीं दक्षिणां दातुमहमुत्सृजे॥ ॐ मातामहप्रमातामहवृद्धप्रमाताम-
हाः सपत्नीकाः नान्दीमुखाः भूर्भुवः स्वः कृतस्य नान्दीश्राद्धस्य
फलप्रतिष्ठासिद्ध्यर्थं द्राक्षामलकयवमूलनिष्क्रयिणीं दक्षिणां दातुम-
हमुत्सृजे॥ ॐ उपास्मैगायतानरः पवमानायेन्दवे॥ अभिदेवाँऽइयं-

क्षते॥ इडामग्नेपुरुद ठं. संठं. सुनिंगो ३ शंश्वत्तमठं. हवमानाय् साध ॥स्यान्नं ÷सूनुस्तनंयोविजावाग्नेसातेंसुमतिर्भूत्वस्मे॥ य० अनेन नांदीश्राद्धं संपन्नम्। ब्रा० सुसंपन्नम्। वाजे वाजे इति विसृज्य॥ ॐ व्वाजेंवाजेवतव्वाजिनोनोधनैंषुव्विप्राऽअमृताऽऋतज्ञा ३ ॥ अस्य मध्वं÷पिबतमादयंध्वं तृप्तायांतपथिभिर्द्देवयानैं ३ ॥ आमावाजस्ये-त्यनुव्रृज्य॥ ॐ आमाव्वाजंस्य प्रसवोजंगम्यादेमेद्यावांपृथिवीव्विश्व-रूपे॥ आमागन्तांपितरांमातराचामा सोमोंऽअमृतत्वेनं गम्यात्॥

प्र० विश्वेदेवाः प्रीयन्तामिति विसृज्य॥ य० मयाचरिते सांकल्पिकना- प्र०
न्दीश्राद्धे न्यूनातिरिक्तो यो विधिः स उपविष्टब्राह्मणानां वचनाच्छ्री-
५० गणेशप्रसादात्परिपूर्णोऽस्तु।ब्रा० अस्तुपरिपूर्णः।इतिनान्दीश्राद्धप्र०॥

अथाचार्यादिवरणम् ॥ उदङ्मुखमाचार्यमुपवेश्य गन्धादिभिः संपूज्य ॥ ॐ अमुकगोत्रोत्पन्नः अमुकप्रवरान्वितः अमुकशर्माऽहं अमुकगोत्रोत्पन्नममुकप्रवरान्वितं शुक्लयजुर्वेदान्तर्गतवाजसने-
यमाध्यंदिनीयशाखाध्यायिनममुकशर्माणं ब्राह्मणमस्मिन्ग्रहशां- ५०

त्याख्ये (वाअमुक) कर्मणि एभिर्वरणद्रव्यैः आचार्यत्वेन त्वामहं वृणे॥ वृतोऽस्मि इति प्रतिवचनम्॥ आचार्यस्तु यथा स्वर्गे शक्रादीनां बृहस्पतिः ॥ तथा त्वं मम यज्ञेऽस्मिन्नाचार्यो भव सुव्रत ॥ १ ॥ अस्मिन् ग्रहशांत्याख्ये (अमुकाख्ये वा) कर्मणि एभिर्वरणद्रव्यैः अमुकगोत्रममुकशर्माणं ब्राह्मणं ब्रह्मत्वेन त्वामहं वृणे ॥ वृतोऽस्मि ॥ यथा चतुर्मुखो ब्रह्मा सर्वलोकपितामहः ॥ तथा त्वं मम यज्ञेऽस्मिन् ब्रह्मा भव द्विजोत्तम ॥ २ ॥ अस्मिन्० सदस्यत्वेन

प्र० त्वामहं वृणे ॥ वृतोऽस्मि ॥ भगवन्सर्वधर्मज्ञ सर्वधर्मभृतां वर ॥
५१ वितते मम यज्ञेऽस्मिन्सदस्यो भव सुव्रत ॥३॥ अस्मिन्० गाण- प्र०
पत्यत्वेन त्वामहं वृणे ॥ वृतोऽस्मि ॥ वांछितार्थफलावाप्त्यै पूजि-
तोऽसि सुरासुरैः ॥ निर्विघ्नं क्रतुसंसिद्ध्यै त्वामहं गणपं वृणे ॥ ४ ॥
अस्मिन्० उपद्रष्टृत्वेन त्वामहं वृणे। वृतोऽस्मि ॥ भगवन्सर्वधर्मज्ञ
सर्वधर्मपरायण ॥ वितते मम यज्ञेऽस्मिन्नुपद्रष्टा भव द्विज ॥ ५ ॥ ५१
अस्मिन्० ऋत्विक्त्वेन त्वामहं वृणे । वृतोऽस्मि ॥ भगवन्सर्वध-

मंत्र सर्वधर्मपरायण । वितते मम यज्ञेऽस्मिन्नृत्विक् त्वम्मे मखे भव ॥६॥ ॐ व्रतेनंदीक्षामाप्नोति दीक्षयाप्नोतिदक्षिणाम् ॥ दक्षिणा श्रद्धामाप्नोतिश्रद्धयासत्यमाप्यते॥ अथ करसंपुटं कृत्वा सर्वान् प्रार्थयेत् ॥ अस्मिन्कर्मणि ये ये तु वृता गुरुमुखादयः॥ सावधानाः प्रकुर्वन्तु स्वं स्वं कर्म यथोदितम् ॥ अस्य यागस्य निष्पत्तौ भवन्तोऽभ्यर्थिता मया ॥ सुप्रसन्नैः प्रकर्तव्यं कर्मेदं विधिपूर्वकम् ॥ यथाविहितं कर्म कुरु ( एकतन्त्रपक्षे कुरुध्वम् ) ॥

प्र० यथाज्ञानं करवाणि ( करवामः ) ॥ इत्याचार्यादिवरणम् ॥ प्र०

आचार्यः आचम्य प्राणानायम्य ॥ देशकालौ संकीर्त्य अस्मिन्

५२ ग्रहशांत्याख्ये कर्मणि यजमानेन वृतोऽहं आचार्यकर्म करिष्ये ।

आचार्यो वामहस्ते गौरसर्षपान् गृहीत्वा दिग्रक्षणं कुर्यात् । तत्र मंत्राः ।

रक्षोहणं वलगहनं वैष्णवीमिदमहं तं वलगमुत्किरामि यम्मे निष्ट्यो

यममात्यो निचखानेदमहं तं वलगमुत्किरामि यम्मे समानो यमसमा

नो निचखानेदमहं तं वलगमुत्किरामि यम्मे सबन्धुर्यमसबन्धुर्निच ५२

खानेदमहंतंब्बलगमुत्किरामि यम्मेंसजातोयमसंजातोनिचखानो
त्कृत्याङ्किरामि॥ १ ॥रक्षोहणौं वो ब्बलगहनः प्रोक्षामिवैष्णवान्नक्षो
हणौं वोब्बलगहनोवंनयामिवैष्णवान्नक्षोहणौंवो ब्बलगहनोवंस्तृणा
मिवैष्णवान्नक्षोहणौवांब्बलगहनाऽउपदधामिवैष्णवीरक्षोहणौवां
बलगहनौपर्यूहामिवैष्णवीवैष्णवमासिवैष्णवास्थ ॥ २ ॥ रक्षसां
भागोसि निरस्त ठं॰ रक्षऽइदमहठं॰ रक्षोभितिष्ठामीदमह ठं॰
रक्षोबवाधऽइदमहठं॰रक्षों धमन्तमोनयामि॥ घृतेनद्यावापृथिवी

प्र० प्रोर्णुवाथांद्यायोर्व्वेस्तोकानामग्निराज्यस्यव्वेतु स्वाहा स्वाहाकृतेऽ प्र०
ऊर्ध्वंनंभसंमारुतंगंच्छतम् ॥ ३ ॥ रक्षोहाव्विश्वचर्षणिरभियोनिम
५२ योंहते ॥ द्रोणेसधस्थमासंदत् ॥ ४ ॥ यदत्र संस्थितं भूतं स्थानमा-
श्रित्य सर्वदा ॥ स्थानं त्यक्त्वा तु तत्सर्वं यत्रस्थं तत्र गच्छतु
॥ १ ॥ अपसर्पंतु ते भूता ये भूता भूमिसंस्थिताः॥ ये भूता विघ्न-
कर्तारस्ते नश्यंतु शिवाज्ञया ॥ २ ॥ अपक्रामंतु भूतानि पिशाचास्स ५२
र्वतो दिशम् ॥ सर्वेषामविरोधेन शांतिकर्म समारभे ॥ ३ ॥ भूतानि

राक्षसा वापि येऽत्र तिष्ठन्ति केचन ॥ ते सर्वेऽप्यपगच्छन्तु ग्रहयागं करोम्यहम् ॥४॥ इति तिष्ठन् पूर्वादिदिक्षु विकिरेत् ॥ उदकोपस्पर्शः ।

ततःपञ्चगव्यकरणम् ॥ गायत्र्या गोमूत्रम् । ॐ तत्स० ॥ गंधद्वारेति गोमयम् ॥ १ ॥ ॐ गंधद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् ॥ ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥ २ ॥ ॐ आप्यायस्वेति पयः ॥ ॐ आप्यायस्वसमेतुतेविश्वतः सोमवृष्ण्यम् । भवावाजस्यसंगथे ॥३॥ ॐ दधिक्राव्ण इति दधि ॥ ॐ दधिक्राव्णो० तु ॥ ४ ॥ ॐ तेजोसी-

प्र० त्याज्यम्॥ ॐ तेजोंसिशुक्रमंस्यमृतंमसिधामनामांसिप्रियंदेवाना प्र०
मनांधृष्टन्देवयजंनमसि॥ ५॥ ॐ देवस्यत्वेति कुशोदकम् ॥ॐ
५४ देवस्यत्वा० ॥ ६ ॥ ॐ इति यज्ञकाष्ठेनालोड्य आपोहिष्ठेति त्रि-
भिर्मंत्रैः कर्मभूमियज्ञसंभारांश्च प्रोक्षयेत्० ततः कृतांजलिः स्व-
स्तिन० इति मन्त्रं द्विवारं पठेत् ॥ भूमौ प्रादेशं कृत्वा ॥
देवाः आयांतु यातुधाना अपयांतु विष्णोर्देवयजनं रक्षस्व ॥ ततः
सर्वतोभद्रदेवतास्थापनं पूजनं च कृत्वा ततः सर्वतोभद्रे कलश- ५४

स्थापनाविधिना कलशं संस्थाप्य कलशोपरि प्रधानप्रतिमां संस्थाप्य विधिना पूजयेत् ॥तद्यथा॥ प्रागुदीच्यां गता रेखाः कुर्यादेकोनविंशतिः ॥ खण्डेन्दुस्त्रिपदः श्वेतपञ्चभिः कृष्णशृङ्खलाः ॥१॥ नीलैकादश वल्ली तु भद्रं रक्तं पदैः नव॥ चतुर्विंशत्सिता वापी परिधिः पीतविंशतिः ॥ २ ॥ मध्ये षोडशभिः कोष्ठैः रक्तं पद्मं सकर्णिकम्॥परिध्यावेष्टितं पद्मं बाह्ये सत्त्वरजस्तमः॥तन्मध्ये स्थापयेद्देवान् ब्रह्माद्याँश्च सुरेश्वरान् ॥३॥ इति सर्वतोभद्रकारिका ॥

प्र० अथ लिङ्गतोभद्रकारिका स्कांदे ॥ रेखा त्वष्टादश प्रोक्ताश्चतु- प्र०
५५ र्लिङ्गसमुद्भवे ॥ कोणेन्दुस्त्रिपदैःश्वेतास्त्रिपदैः कृष्णशृङ्खलाः ॥ १ ॥
बल्ली सप्तपदा नीला भद्रं रक्तं चतुष्पदम् ॥ भद्रपार्श्वे महारुद्रं कृष्ण-
मष्टादशैः पदैः ॥ २ ॥ शिवस्य पार्श्वतो वापीं कुर्यात्पञ्चपदां सिताम ॥
पदमेकं तथा पीतं भद्रवाप्योस्तु मध्यतः ॥ ३ ॥ शिरसि शृङ्खलाया-
श्च कुर्यात्पीतं पदत्रयम ॥ लिङ्गानां स्कन्धतःकोष्ठा विंशतिः रक्तव- ५५
र्णकाः ॥ ४ ॥ परिधिःपीतवर्णैस्तु पदैःषोडशभिःस्मृता ॥ पदैस्तु नवभिः

पश्चाद्रक्तं पद्मं सकर्णिकम् ॥ ५ ॥ इति लिङ्गतोभद्रकारिका समाप्ता ॥

अथ पञ्च वर्णान्युक्तानि पञ्चरात्रे। रजांसि पञ्च वर्णानि मण्डलार्थं हि कारयेत् ॥ शालितण्डुलचूर्णेन शुक्लं वायवसम्भवम् ॥ १ ॥ रक्तं कुसुम्भसिन्दूरं गैरिकादिसमुद्भवम् ॥ हारितालोद्भवं पीतं रजनीसम्भवं क्वचित् ॥ २ ॥ कृष्णदग्धैर्यवैः कार्यं हरितं बिल्वचूर्णकम् ॥ कारयेत्सर्वधान्यैर्वा वर्णकैरुपशोभितम् ॥

अथ वेदोक्तसर्वतोभद्रलिङ्गतोभद्रदेवतास्थापनक्रमः ॥ तद्यथा ॥

ॐ ब्रह्मयज्ज्ञानम्प्रथमम्पुरस्ताद्विसीमतः सुरुचोव्वेनऽआव ऽ ॥ सबु
प्र० ध्न्याऽउपमाऽअस्यव्विष्ठाः सतश्च योनिमसतश्च व्विवः ॥ प्र०
मध्ये कर्णिकायां ॐ भू० ब्रह्मणे नमः॥ ब्रह्माणमावाहयामि ॥१॥
५६ ॐ व्वय ठं० सोमब्रते तव मनस्तनूषु बिभ्भ्रतऽ॥ प्रजावन्तऽसचेमहि॥
उत्तरे वाप्यां ॐ भू० सोमाय नमः सोममा०॥२॥ॐ तमीशानञ्जगत-
स्तस्थुषस्प्पतिन्धियञ्जिन्न्वमवसेहूमहे व्वयम्॥ पूषानो यथाव्वेद-
सामसद्वृधे रक्षिता पायुरदब्धऽ स्वस्तये॥ ईशान्यां खण्डेन्दौ ॐ ५६

भू० ईशानाय० ईशानमा० ॥३॥ ॐ त्रातारमिन्द्रमवितारमिन्द्र
ठं० हवे हवे सुहवठं० शूरमिन्द्रम् ॥ ह्वयामि शक्रम्पुरुहूतमिन्द्र ᳪ
स्वस्तिनो मघवा धात्विन्द्रः ॥पूर्वे वाप्यां ॐ भू० इन्द्राय० इन्द्रमा-
वा० ॥ ४ ॥ ॐ त्वन्नोऽअग्ने तव देव पायुभिर्म्मघोनो रक्षतन्न्वश्च
वन्द्य ॥ त्राता तोकस्य तनये गवामस्य निमेषठं० रक्षमाणस्तव
व्रते॥ आग्नेय्यां खण्डेन्दौ ॐ भू० अग्नये० अग्निमा०॥ ५ ॥
ॐ समायत्वाङ्गिरस्वते पितृमते स्वाहा ॥ स्वाहा घर्म्माय स्वाहा

प्र० घर्म्मऽ पित्रे ॥ दक्षिणे वाप्यां ॐ भू० यमाय० यममा० ॥६॥
ॐ असुंन्न्वन्तमयंजमानामिच्छस्तेनस्येत्यामान्न्वंहितस्कंरस्य॥ प्र०
५७ अन्न्यमुस्म्मादिच्छसातंऽइत्या नमो देवि निर्ऋते तुभ्यमस्तु ॥
नैर्ऋत्यां खण्डेन्दौ ॥ ॐ भू० निर्ऋतये० निर्ऋतिमा०॥७॥ ॐ
तत्त्वांयामि ब्ब्रह्मणा व्वन्दमानस्तदाशास्तेयजमानो हविर्भिः ॥
अहेडमानो वरुणेहबोद्धयुरुंशठं० समानऽआयुः प्प्रमोषीः॥ पश्चि-
मे वाप्यां ॐ भू० वरुणाय० वरुणमा० ॥८॥ ॐ आनो नियुद्भिः ५७

शतिनीभिरध्वरꣳ॰सहस्त्रिणीभिरुपयाहि यज्ञम् ॥ व्वायोऽअ-
स्मिन्त्सवने मादयस्व यूयम्पात स्वस्तिभिः सदानः॥ वायव्यां
खण्डेन्दौ ॐ भू॰ वायवे॰ वायुमा॰॥९॥ ॐ व्वसुभ्यस्त्वा रुद्रेभ्य-
स्त्वादित्येभ्यस्त्वा सञ्जानाथान्द्यावा पृथिवी मित्त्रावरुणौत्वा
वृष्ट्यावताम्॥व्यन्तुव्वयोक्क्तꣳ॰रिहाणामरुताम्पृषतीर्ग्गच्छव्वशा
पृश्निर्भूत्वा दिवङ्गच्छ ततोनो व्वृष्टिमावह ॥ चक्षुष्पाऽअग्ग्नेसि
चक्षुर्म्मे पाहि ॥ वायुसोमयोर्मध्ये भद्रे॥ ॐ भू॰ अष्टवसुभ्यो नमः

प्र० अष्टवसून् आवाहयामि ॥१०॥ ॐ नमस्ते रुद्रमन्न्यवऽ उतोतऽइ प्र॰
५८ षवे नमः ॥ बाहुभ्यामुतते नमः ॥ सोमेशानयोर्मध्ये भद्रे० ॥ ॐ भू०
एकादशरुद्रेभ्यो० एकादशरुद्राना० ॥११॥ ॐ यज्ञोदेवानाम्प्रत्ये-
तिसुम्नमादित्यासो भवंतामृडयन्तः ॥ आवोर्व्वाचीसुमतिर्व्वं-
वृत्त्याद्ठं० होश्चिद्याव्वरिवोवित्तरासत ॥ ईशानेन्द्रमध्ये भद्रे ॥
ॐ भू० द्वादशादित्येभ्यो नमः द्वादशादित्यानावाहयामि ॥१२॥ ५८
ॐ अश्विना तेजसा चक्षुः प्राणेन सरस्वती व्वीर्यम् ॥ व्वाचेन्द्रो

बलेनेन्द्रायदधुरिन्द्रियम् ॥ ॐ भू० इन्द्राग्निमध्ये भद्रे ॥ ॐ भू०
अश्विभ्यां० अश्विनौ० ॥ १३ ॥ ॐ विश्वेदेवासऽआगंत शृणुता
मऽइमर्ठ० हवम् ॥ एदम्बर्हिर्न्निषीदत ॥ उपयाम गृहीतोसि विश्वे-
भ्यस्त्वा देवेभ्यऽएषते योनिर्विश्वेभ्यस्त्वादेवेभ्यः ॥ अग्नि-
यममध्ये भद्रे ॥ ॐ भू० सपैतृकविश्वेभ्यो देवेभ्यो० सपैतृकविश्वा-
न्देवानावा० ॥ १४ ॥ ॐ अभित्यन्देवर्ठ० सवितारमोण्योः कविक्र-
तुमर्च्चामि सत्य संवर्ठ० रत्नधाम भिप्प्रियम्मतिङ्कविम् ॥ ऊर्द्ध्वायस्या

प्र० मतिर्भाऽअदिंद्युतत्त्सवींमनिाहिरंण्यपाणिरमिमीत सुक्रतुं ÷ कृपा- प्र०
५६ स्वं ÷॥ प्रजाभ्यंस्त्वाप्प्रजास्त्वांनुप्प्राणंन्तु प्प्रजास्त्वमंनुप्प्राणी-
हि॥ यमनिर्ऋतिमध्ये भद्रे॥ ॐ भू० सप्तयक्षेभ्यो० सप्तयक्षाना०
॥१५॥ ॐ नमोस्तु सर्प्पेभ्योयेके चं पृथिवीमनुं॥ येऽअन्तरिंक्षे येदि
वितेभ्यं÷सर्प्पेभ्यो नमं÷॥निर्ऋतिवरुणमध्ये भद्रे॥ॐ भू० अष्टकु-
लनागेभ्यो० अष्टकुलनागाना०॥१६॥ॐ ऋताषाड् ऋतधामाग्नि-
र्गन्धर्व्वस्तस्यौषधयोप्सरसो मुदो नामं ॥ सनंऽइदम्ब्रह्मं क्षत्र- ५६

म्पातु तस्मै स्वाहा वाट्ताभ्यः स्वाहा ॥ वरुणवायुमध्ये भद्रे ॥ ॐ
भू० गंधर्वाप्सरोभ्यो नमः गन्धर्वाप्सरसः आवा० ॥१७॥ ॐ यद
क्रन्दः प्रथमञ्जायमानऽउद्यन्त्समुद्रादुतवापुरीषात्॥ श्येनस्यप
क्षाहरिणस्यबाहूऽउपस्तुत्यम्महिजातन्तेऽअर्व्वन्॥ब्रह्मसोममध्ये
वाप्यां लिङ्गे वा॥ॐ भू०स्कन्दाय नमःस्कन्दमा०॥१८॥ ॐ आशुः
शिशानो व्वृषभोन भीमोघनाघनः क्षोभणश्चर्षणीनाम्॥सङ्क्रन्दनो
निमिषऽएकवीरः शतꣳसेनाऽअजयत्साकमिन्द्रः॥तदुत्तरे॥ ॐ

प्र० भू०वृषभाय नमः वृषभमावा०।१९।ॐ कार्षिरसि समुद्रस्य त्वाक्षि प्र०
६० त्या उन्नयामि॥ समापोऽअद्भिरग्मत समोषधीभिरोषधीः॥ तदुत्तरे
ॐ भू० शूला० शूलमा०॥२०॥अनेनैव मंत्रेण तदुत्तरे ॐ भू० महाका
लाय नमः महाकालमा०२१ ॐ शुक्रज्योतिश्च चित्रज्योतिश्च सत्य
ज्योतिश्च ज्योतिष्माँश्च शुक्रश्च ऋतपाश्चात्यंठ०हा०॥ब्रह्मेशा-
नमध्ये शृङ्खलायाम्॥ ॐ भू० दक्षादिसप्तगणेभ्यो नमः दक्षादि-
सप्तगणाना०॥२२॥ ॐ अम्बेऽअम्बिके० ब्रह्मेन्द्रमध्ये वाप्याम् ६०

लिङ्गे वा भू० दुर्गायै नमः ॥ दुर्गामा० ॥ २३॥ ॐ इदं विष्णुर्विच
क्रमे त्रेधा निदधे पदम् ॥ समूढमस्य पाॅंसुरे स्वाहा ॥ तत्पूर्वे ॥
ॐ भू० विष्णवे नमः ॥ विष्णुमा० ॥ २४ ॥ पितृभ्यः
स्वधायिभ्यः स्वधानमः पितामहेभ्यः स्वधायिभ्यः स्व-
धानमः प्रपितामहेभ्यः स्वधायिभ्यः स्वधानमः ॥ अक्षन्पि
तरोमीमदन्त पितरोऽतीतृप्यन्तपितरः पितरः शुन्धध्वम् ॥
११ ब्रह्माग्निमध्ये श्टं० । ॐ भू० स्वधायै० ॥ स्वधां० ॥ २५ ॥ ॐ

प्र० परंम्मृत्योऽअनुपरेहि पन्थांय्यस्तेंऽअन्न्यऽइतरोदेवयानात् ॥ चक्षु- प्र०
६१ ष्मते शृण्वते तेंब्ब्रवीमिमानं÷प्प्रजा ँ रीरिषोमोतवीरान् ॥
ब्रह्मयममध्ये वाप्यां लिङ्गे वा। ॐ मृत्युरोगेभ्यो नमः ॥ मृत्युरो-
गान्० ॥ २६ ॥ ॐ गुणानांन्त्वा० ॥ ब्रह्मनिर्ऋतिमध्ये शृ० ।
ॐ गणपतये नमः॥गणपतिं० ॥ २७ ॥ ॐ अप्स्वग्ग्ने सधिष्ट्ठु
वसौषधीरनुरुध्यसे ॥ गर्ब्भे सञ्जायसे पुनं÷ ॥ ब्रह्मवरुणमध्ये ६१
वाप्यां लिङ्गे वा । ॐ अद्भ्यो नमः ॥ अपः० ॥२८॥ ॐ मरु-

तोषस्यहिक्षयै पाथादि वोव्विंमहसः ॥ ससुंगोपातंमो जनः ॥
ब्रह्मवायुमध्ये श्रृं० । ॐ भू० मरुद्भ्यो नमः ॥ मरुतः० ॥२९॥
ॐ स्योना पृथिवि० ॥ ब्रह्मणः पादमूले । ॐ भू० पृथिव्यै नमः ॥
पृथ्वीं० ॥ ३० ॥ ॐ पंचनद्यः सर० ॥ तदुत्तरे । ॐ भू० गङ्गादि
नदीभ्यो नमः ॥ गङ्गादी० ॥ ३१ ॥ ॐ समुद्रोसि नभस्वानार्द्रदानुः
शम्भूर्म्मयो भूरभिमांव्वाहिस्वाहा मारुतोसि मरुतांङ्गणः ॥ शम्भू
र्म्मयो भूरभिमांव्वाहि स्वाहा वस्यूरसिदुवस्वाञ्छम्भूर्म्मयो भूर

भिमांव्वाहि स्वाहा ॥ तदुत्तरे । ॐ भू० सप्तसागरेभ्यो नमः ॥ सप्त
प्र० सागरान्० ॥ ३२ ॥ ॐ प्रपर्व्वतस्य व्वृषभस्य पृष्ठान्नावंश्चच- प्र०
रन्ति स्वसिचंऽइयानाः ॥ ताऽआववृत्रन्न धुरागुदक्ताऽअहिम्बु-
६२ ध्न्यमनुरीयमाणाः ॥ व्विष्णोर्व्विक्रमणमसि व्विष्णोर्व्विक्क्रान्त-
मसि व्विष्णोः क्क्रान्तमसि ॥ कर्णिकापरिधौ । ॐ भू० मेरवे नमः ॥
मेरुं० ॥ ३३ ॥ अथ सोमादिक्रमेण ॥ ॐ गणानान्त्वा० ॥ सत्त्व
वाह्यपरिधौ । ॐ भू० गदायै नमः ॥ गदां० ॥ ३४ ॥ ॐ त्रिठं. ६२

शद्धामुद्विराजतिद्वाक्कपतङ्गायं धीयते ॥ प्रतिवस्तोरहद्युभिः ॥
ईशान्यां ॥ ॐ भू० त्रिशूलाय० ॥ त्रिशूलं० ॥३५॥ ॐ महाँ२
ऽइन्द्रोव्वज्रहस्तः षोडशीशर्म्मयच्छतु ॥ हन्तुपाप्मानं यस्मोस्मा-
न्द्वेष्टि ॥ उपयाम गृहीतोसि महेन्द्रायत्वैषतेयोनिर्म्महेन्द्राय
त्वा ॥पूर्वे॥ ॐ भू० वज्राय नमः॥वज्रमा०॥३६॥ ॐ व्वसुचमेव्वस-
तिश्चमे कर्म्मचमे शक्तिश्चमेर्थश्चमएमश्चमऽइत्याचमेग-
तिश्चमे यज्ञेनं कल्प्यन्ताम्॥आग्नेय्याम् ॥ ॐ भू० शक्तये नमः॥

१० शक्ति०॥३७॥ॐ इडऽएह्यदितऽएहि काम्म्याऽएत॥मयिंवः काम- ६१
६२ धरणम्भूयात ॥ दक्षिणे॥ ॐ भू० दण्डाय नमः॥ दण्डं० ॥३८॥
ॐ खड्गोवैश्वदेवऽश्वाकृष्णऽ कर्णोगर्दभस्तरक्षुस्तेरक्षसामिन्द्राय
शूकरऽ सिंहं० होमारुतः कृकलासः पिप्पका शकुनिस्तेशरव्यायै
विश्वेषान्देवानाम्पृषतऽ॥नैर्ऋत्यां॥ॐ भू०खड्गाय नमः॥खड्गं॥३९॥
ॐ उदुत्तमं व्वरुणपाशमस्म्मदवाधमं व्विमध्यमछंश्रथाय ॥
अथावयमादित्य व्व्रते तवानागसोऽअदितये स्याम ॥ पश्चिमे॥ ॐ ६३

पाशाय नमः ॥ पाशं० ॥४०॥ॐ अ॒ठं॒०शुश्च॑मे र॒श्मिश्च॑ मे
दा॑भ्यश्च॑ मेऽधि॑पतिश्च मऽउपा॒ठं॒शुश्च॑मेन्तर्य्या॒मश्च॑ मऽऐन्द्र-
वाय॒वश्च॑मे मैत्रावरु॒णश्च॑ मऽआश्वि॒नश्च॑मे प्प्रातिप्प्र॒स्थानश्च॑मे
शु॒क्रश्च॑मे म॒न्थीच॑मे य॒ज्ञेन॑ कल्प्यन्ताम् ॥ वायव्याम् ॥ॐ भू०
अङ्कुशाय नमः॥ अङ्कुशं० ॥४१॥ ॐ आयङ्गौ ऽ पृश्निरक्रमी-
दस॑दन्न्मा॒तरम्पुरः॥ पि॒तर॑ञ्च प्प्रयन्त्स्वः ॥तद्वाह्ये उत्तरे रक्तपरिधौ
सोमादि० ॥ ॐ भू० गौतमाय नमः ॥ गौतमं० ॥ ४२ ॥ ॐ

प्र० अयन्दक्षिणा व्विश्श्वकर्म्मा तस्य मनो व्वैश्श्वकर्म्मणङ्ग्रीष्म्मो प्र०
६४ मानसस्त्रिष्टुब्ग्ग्रैष्म्मीत्रिष्टुभः स्वारथ्ठँस्वारा दन्तर्य्यामोन्तर्य्या
मात्पञ्चदशः पञ्चदशाद्वृहद्भरद्वाजऽऋषिः प्प्रजापतिगृहीतया
त्वया मनो गृह्णामि प्प्रजाब्भ्यः ॥ ईशान्यां ॥ ॐ भू० भरद्वा-
जाय नमः ॥ भरद्वाजं० ॥ ४३ ॥ ॐ इदमुत्तरात्स्वस्तस्यश्श्रोत्र
ठं० सौवठं० शरच्छ्रौत्र्यनुष्टुप्शारद्य्यनुष्टुभऽऐडमैडान्मन्थीम ६४
न्थिनऽएकविठं० शऽएकविठं० शाद्वैराजं व्विश्श्वामित्रऽऋषिः

प्प्रजापतिगृहीतया त्वयाश्श्रोत्रङ्गृह्णामि प्प्रजाब्भ्यः ॥ पूर्वे ॥ ॐ
भू० विश्वामित्रायनमः॥विश्वामित्रं० ॥४४॥ ॐ त्र्यायुषञ्जम-
दग्नेः कश्यपस्य त्र्यायुषम् ॥ यद्देवेषु त्र्यायुषन्तन्नो ऽअस्तु
त्र्यायुषम् ॥आग्नेय्यां। ॐ भू० कश्यपाय नमः॥कश्यपं ॥४५॥
ॐ अयम्पश्चाद्विश्श्वव्व्यचास्तस्य चक्षुर्व्वैश्श्वव्व्यचसं व्वर्षाश्चा-
क्षुष्य्यो जगतीव्वार्षी जगत्त्याऽऋक्स्सममृक्स्समाच्छुक्रऽशुक्रा-
त्सप्तदशऽ सप्तदशाद्वैरूपञ्जमदग्निर्ऋषिः प्प्रजापतिगृहीतया

प्र० त्वयाचक्षुर्गृह्णामिप्प्रजाब्भ्यः॥दक्षिणे॥ॐ भू० यमदग्नये नमः॥ प्र०
६५. यमदग्निं० ॥४६॥ ॐ अयम्पुरोभुवस्तस्यप्प्राणो भौमायनो
व्वसन्तऽप्प्राणायनो गायत्री व्वासन्ती गायत्र्यै गायत्रङ्गायत्रा-
दुपाꣳशुरुपाꣳशोस्त्रिवृत्त्रिवृतो रथन्तरं व्वसिष्ठऽऋषिः प्प्रजा-
पतिगृहीतया त्वया प्प्राणङ्गृह्णामि प्प्रजाब्भ्यः॥नैर्ऋत्याम्॥ॐ भू० व-
सिष्ठाय नमः॥वसिष्ठं०॥४७॥ॐ अत्र पितरो मादयद्ध्वं यथाभागमा- ६५
वृषायद्ध्वम्॥अमीमदन्तपितरोयथाभागमावृषायिषत॥पश्चिमे॥ॐ

भू० अत्त्रये नमः॥ अत्रिं० ॥४८॥ ॐ तम्पत्नीभिरनुगच्छेम देवाः
पुत्रैर्भ्रातृभिरुतवा हिरण्ण्यैः॥ नाकङ्गृभ्णानाऽसुकृतस्यलोकेतृती
ये पृष्ठेऽअधिरोचने दिवः॥ वायव्यां॥ ॐ भू० अरुन्धत्यै नमः॥
अरुन्धतीं० ॥ ४९ ॥ तद्वाह्ये कृष्णपरिधौ पूर्वादिक्रमेण । ॐ
अदित्यैरास्न्नासीन्द्राण्याऽउष्णीषः॥ पूषासिघर्म्मायदीष्व॥ पूर्वे॥
ॐ भू० ऐन्द्रयै नमः॥ ऐन्द्रीं०॥५०॥ ॐ अम्बेऽअम्बि०॥ आग्ने-
य्यां॥ ॐ भू० कौमार्य्यै नमः॥ कौमारी० ॥५१॥ ॐ इन्द्रायाहि

प्र० धियेषितो विप्प्रंजूतः सुतावतः ॥ उपब्ब्रह्म्माणि ब्वाग्घतः ॥ प्र०
६६ दक्षिणे ॥ ॐ भू० ब्राह्मयै नमः ॥ब्राह्मीमा० ॥५२॥ ॐइन्द्रस्य
क्रोडोदित्यै पाजस्यन्दिशाञ्जत्रवोदित्यै भसज्जीमूतान्न्हृदयौ-
पशेनान्तरिक्षम्पुरीततानभंऽउदर्य्येण चक्रवाकौमतं स्न्नाभ्यान्दि
वंव्वृक्काभ्यांङ्गिरीन्न्प्लाशिभिरुपलान्न्प्लीह्हाव्वल्म्मीकान्न्क्लोम
भिर्ग्लौभिर्गुल्म्मान्हिराभिः स्रवन्तीर्हृदान्कुक्षिभ्याᳬं स ६६
मुद्रमुदरेण वैश्वानरं भस्म्मना ॥ नैर्ऋत्यां॥ ॐ भू० वाराह्यै नमः॥

वाराहीमा० ॥ ५३ ॥ ॐ अम्बेऽअम्बिके० ॥ पश्चिमे चामुं-
डायै नमः ॥ चामुंडामा० ॥ ५४ ॥ ॐ आप्यायस्व समेतु ते
विश्वतः सोमवृष्ण्यम् ॥ भवा वाजस्य सङ्गथे ॥ वायव्ये ॥
ॐ भू० वैष्णव्यै नमः ॥ वैष्णवीमा० ॥ ५५ ॥ ॐ याते रुद्र
शिवातनूरघोरा पापकाशिनी ॥ तयानस्तन्वाशन्तमया गिरिश-
न्ताभिचाकशीहि ॥ उत्तरे ॥ ॐ भू० माहेश्वर्यै नमः ॥ माहेश्व-
रीमा० ॥ ५६ ॥ ॐ समख्ये देव्या धिया सन्दक्षिणया रुचक्षसा ॥ मामऽ

प्र० आयुः प्रमोषीर्म्मोऽ अहन्तवं वीरविंदेय तवं देवि सन्दशि ॥ प्र०

६७ ईशान्यां । ॐ भू० वैनायक्यै नमः ॥ वैनायकीं० ॥५७॥ इति सर्वतोभद्रदेवतास्थापनक्रमः ॥

अथ लिंगतोभद्रदेवताविशेषः ॥ ॐ नमः कृत्स्नायतया धावंते सत्त्वंनाम्पतये नमो नमः सहमानायनिव्याधिनेऽआव्याधिनीनाम्पतये नमोनमो निषङ्गिणे ककुभायस्तेनानाम्पतये नमो- ६७

नमो निचेरवे परिचरायारण्यानाम्पतये नमः ॥ तद्बाह्ये पूर्वे ॥

ॐ भू० असिताङ्गभैरवाय नमः ॥ असिताङ्गभैरवं० ॥ १ ॥ ॐ
श्वित्रऽआदित्यानामुष्ट्रो घृणीं वा न्वार्ध्रीनसस्ते मत्याऽअरण्या
यसृमरोरुरूरौद्रः क्वयिः कुटरुर्दात्यौहस्ते व्वाजिनाङ्कामाय-
पिकः॥ आग्नेय्यां ॥ ॐ भू ०रुरुभैरवाय नमः ॥ रुरुभैरवं० ॥२॥
ॐ उग्रंल्लोहितेन मित्रठं० सौब्रंत्येनरुद्रन्द्रौर्ब्रत्येनेन्द्रंम्प्र
क्रीडेनं मरुतो बलेन साद्ध्यान्प्रमुदा ॥ भवस्य कण्ठ्यठं० रुद्र-
स्यान्तःपाश्र्व्यम्महादेवस्य यकृच्छर्व्वस्य व्वनिष्ठुः पशुपतेः पुरीतत्॥

प्र० दक्षिणे ॥ ॐ भू० चण्डभैरवाय नमः ॥ चण्डभैरवं० ॥३॥ ॐ प्र०
इन्द्र॑स्य क्रोडोदि॑त्यै पाज॒स्यन्दि॒शाञ्ज॒त्रवो दि॑त्यै भ॒सज्जीमूता॑-
६८ न्हृदयौप॒शेना॒न्तरि॑क्षम्पुरी॒तता॒नभंऽउद॒र्य्यैं॑णचक्रवा॒कौमतं॑स्ना॑-
भ्यान्दिवं॑ वृ॒क्काभ्यांगि॒रीन्प्ला॒शिभि॒रुपलान्प्ली॒न्हा व॒ल्म्मी
कान्क्लो॒मभि॑र्ग्लौ॒भिर्गु॒ल्म्मान्हि॒राभिः॑ स्रव॑न्तीर्ह्र॒दान्कु॒
क्षिभ्यां ॐ समु॒द्रमु॒दरे॑णवैश्श्वान॒रम्भस्मं॑ना । नैर्ऋत्यां ॥ ॐ ६८
भू० क्रोधभैरवाय नमः ॥ क्रोधभैरवं० ॥४॥ ॐ उन्न॒तऽऋ॑षभो

त्वांमुनस्तऽऐन्द्रावैष्णवाऽउन्नत ऽ शितिबाहु ऽ शितिपृष्ठस्तऽ
ऐन्द्राबार्हस्पत्या ऽशुकरूपा वाजिना ऽ कल्माषांऽआग्नि मारु-
ताः श्यामा ऽ पौष्णा ः ॥ पश्चिमे ॥ ॐ भू० उन्मत्तभैरवाय
नमः ॥ उन्मत्तभैरवं० ॥ ५ ॥ ॐ कार्षिरसि० ॥ वायव्यां । ॐ
भू० कपालभैरवाय नमः ॥ कपालभैरवं० ॥ ६ ॥ ॐ उग्रश्चं
भीमश्चध्वान्तश्च धुनिश्च ॥ सासह्वाँश्चाभियुग्वा चं विक्षिपः
स्वाहा ॥ उत्तरे ॥ ॐ भू० भीषणभैरवाय नमः ॥ भीषणभैरवं०

प्र० ॥ ७ ॥ ॐ नमः शम्भवाय च मयोभवाय च नमः शङ्कराय च प्र०
६१ मयस्कराय च नमः शिवाय च शिवतराय च ॥ ईशान्यां। ॐ भू०
संहारभैरवाय नमः॥ संहारभैरवं० ॥ ८ ॥ ॐ नमः श्वभ्यः श्वप-
तिभ्यश्च वो नमो नमो भवाय च रुद्राय च नमः शर्वाय च
पशुपतये च नमो नीलग्रीवाय च शितिकण्ठाय च ॥ तद्वाह्ये पूर्वे॥
ॐ भू० भवाय नमः॥ भवं०॥ ९ ॥ ॐ अग्निं ठं. हृदयेनाशनिं ठं. हृद-
याग्रेण पशुपतिं कृत्स्नहृदयेन भवं यक्ना॥ शर्वम्मतस्नाभ्यामी- ६१

शांनम्मन्युनांमहादेवमंन्तः पर्शुध्येनोग्ग्रन्देवंवांनिष्टुनांव्वसिष्ठहनुः
शिङ्गीनिकोश्याभ्यांम ॥ आग्नेय्यां। ॐ भू० सर्वाय नमः॥सर्वं०
॥२॥ ॐ उग्रह्लोहितेन०॥दक्षिणे ॥ भू० पशुपतये नमः ॥ पशुप-
तिं० ॥॥ ३ ॥ ॐ तमीशांनं जगंतस्तस्थुषस्प्पतिंन्धियञ्जिन्व-
मवंसे हूमहे व्वयम॥पूषानो यथाव्वेदंसामसंद्धधेरंक्षितापायुरदंब्धः
स्वस्तयै॥ नैर्ऋत्यां।ॐ भू० ईशानाय नमः ॥ईशानं० ॥४॥ॐ नम-
स्तैरुद्रमन्यवं०॥ पश्चिमे॥ॐ भू० रुद्राय नमः रुद्रं०॥५॥ॐ उग्रश्च्चं

प्र० भीमश्चं०॥वायव्यां ॥ ॐ उग्राय नमः ॥ उग्रं०॥६॥ ॐ व्वेदाहमे
७० तम्पुरुषम्महान्तमादित्यवर्णन्तमसः परस्तात् ॥ तमेव विदित्वाति प्र०
मृत्युमेति नान्न्यः पन्था व्विद्यतेऽयनाय ॥ उत्तरे ॥ ॐ भू०
भीमाय नमः॥ भीमं०॥७॥ ॐ मानो महान्तमुतमानोऽअर्ब्भक-
म्मानऽउक्षन्तमुतमानऽ उक्षितम ॥ मानोव्वधीः पितरम्मोतमात-
रम्मानः प्प्रियास्तन्न्वो रुद्ररीरिषः ॥ ईशान्यां ॥ ॐ भू० महते
नमः॥ महान्तं०॥ ८ ॥ ॐ स्योनापृथिवि० ॥ तद्वाह्यो पूर्वे । ॐ ७०

भू० अनन्ताय नमः ॥ अनन्तं० ॥१॥ ॐ देहि मे ददामि ते नि मे धेहि-
नि ते दधे ॥ निहारं च हरासि मे निहारं निर्हराणि ते स्वाहा ॥ आ-
ग्नेय्यां । ॐ भू० वासुकये नमः ॥ वासुकीं० ॥२॥ ॐ नमस्तक्षभ्यो
रथकारेभ्यश्च वो नमो नमः कुलालेभ्यः कर्म्मारेभ्यश्च वो नमो
नमो निषादेभ्यः पुञ्जिष्ठेभ्यश्च वो नमो नमः श्वनिभ्यो मृग-
युभ्यश्च वो नमः ॥ दक्षिणे। ॐ भू० तक्षकाय नमः ॥ तक्षकं०
॥ ३ ॥ ॐ पुरुषमृगश्चन्द्रमसो गोधा कालका दार्वाघाटस्ते वन-

अ० स्प्पतीनाङ्कृकवाकुः सावित्रीहꣳ सोव्वातस्यनक्रोमकरꣳकुलीपय- १०
स्ते कूपारस्य ह्रियै शल्यकꣳ ॥ नैर्ऋत्यां । ॐ भू० कुलिशाय नमः
७१ कुलिशं० ॥ ४ ॥ ॐ सोमायकुलुङ्गऽआरण्ण्योजोनकुलꣳ शकाते
पौष्ण्णाऽक्रोष्टामायोरिन्द्रस्यगौरमृगऽपिद्वोन्न्यङ्कुः कक्कटस्ते-
नुमत्यै प्प्रतिश्श्रुत्कायै चक्रवाकः ॥ पश्चिमे । ॐ भू० कर्कोटकाय
नमः ॥ कर्कोटकं० ॥ ५ ॥ ॐ अग्निर्ऋषिꣳपवमानꣳपाञ्चजन्न्यꣳपुरो- ७१
हितꣳ ॥ तमीमहेमहागयम् ॥ उपयामगृहीतोस्यग्नये त्वाव्वर्च्चं

सऽएषते योनिंरुग्गनयैत्वावृध्र्ंसे।वायव्यां।ॐ भू० शंखपालाय नमः शंखपालं० ॥६॥ ॐ सीसैनुतंत्रुम्मनसामनुीषिणंऽऊर्ण्णासूत्रेण कुवयोंव्वयन्ति अुश्विनां युज्ञठं.संविुता सरंस्वुतीन्द्रंस्य रूपं व्वरुंणोभिषुज्यन्॥उत्तरे ॐ भू० कम्बलाय नमः॥कम्बलं०॥७॥ॐ अश्वं स्तूपरोगौ मृगस्त प्प्रांजापुत्या श्कृष्णग्ग्रीवऽआग्गनेयुे. शटै पुरस्तांत्सारस्वुती मे. ष्युधस्ताद्धन्न्वौराश्विनावुधोरांमौ .ह्वौ सौमापौष्णश्यामो नाभ्यांठंसौर्य्ययामौश्श्वेतश्चं कृष्णश्चं पाश्र्श्व-

प्र० यौस्त्वाष्ट्रौ लोमशसक्थौ सक्थ्यो र्व्वायव्य÷श्वेतश्पुच्छऽइंद्रा प्र०
यस्व पस्यायव्वैहद्दैष्णवो व्वामुन श॥ईशान्यां । ॐ भू० अश्व-
७२ त्तराय०॥ अश्वत्तरं०॥८॥ नमःश्वभ्यःश्वपतिभ्यश्चवो नमो
नमो० ॥ ईशानेन्द्रमध्ये।ॐ भू० शूलाय नमः॥ शूलं०॥ १॥ ॐ
चन्द्रमा मनसो जातश्चक्षोःसूर्यौऽअजायत । श्रोत्राद्वायुश्च
प्राणश्चमुखादग्निरजायत ॥ इन्द्राग्निमध्ये । ॐ भू० चन्द्र- ७२
मौलिने नमः॥चन्द्रमौलिनं० ॥२ ॥ ॐ चन्द्रमाऽअप्स्वन्तरासु

प्रण्णोंधावतेदिवि ॥ रयिम्पिशाङ्गम्बहुलम्पुरुस्पृहठं॰ हरिरितिकानि-
क्रदत ॥ अग्नियमयोर्मध्ये । ॐ भू॰ चन्द्रमसे नमः। चन्द्रमसं॰
॥ ३ ॥ ॐ आशुः शिशा॰ ॥ यमनिर्ऋतिमध्ये । ॐ भू॰ वृष
भध्वजाय नमः ॥ वृषभध्वजं ॥ ४ ॥ ॐ सुगावो देवाः सदनाऽ
अकर्म्मयऽआजग्मेदठं॰ सवनञ्जुषाणाऽ ॥ भरमाणाव्वहमा-
नाहवीठंष्यस्मेधत्त व्वसवोव्वसूनि स्वाहा ॥ निर्ऋतिवरुणमध्ये ॥
ॐभू॰ त्रिलोचनाय नमः॥ त्रिलोचनं॰॥५॥ ॐरुद्राऽसुठं॰ सृज्यं

प्र० पृथिवीम्बृहज्ज्योतिः समीधिरे ॥ तेषांम्भानुरजस्त्रऽइच्छुक्रोदेवेषु प्र०
७३ रोचते॥वरुणवायुमध्ये। ॐभू० शक्तिधरायनमः शक्तिधरं० ॥६॥ॐ
त्र्यम्बकं यजामहे०॥ वायुसोममध्ये। ॐभू० महेश्वरायनमः॥महे
श्वरं०॥७॥ ॐ याबाङ्कसा०॥सोमेशानमध्ये। ॐ भू० शूलपाणये
नमः॥शूलपाणिं०॥८॥ इति लिङ्गतोभद्रदेवतास्थापनं पूजनं च ॥

तत्र मध्ये ताम्रकलशं प्रतिष्ठाप्य तस्योपरि स्वर्णमयीं ७२
प्रधानप्रतिमामग्न्युत्तारणपूर्वकं स्थापयेत् ॥

अथाग्न्युत्तारणविधिः ॥ तत्राचार्यः पात्रान्तरे प्रतिमां निधाय घृतेनाभ्यज्य उपरि जलधारां कुर्य्यात् ॥ तत्रमंत्राः ॥ ॐ समुद्रस्यत्वा वंकयाग्ने र्परिव्ययामसि ॥ पावकोऽअस्मभ्यंठं० शिवो भंव ॥ १ ॥ ॐ हिमस्यत्वा जरायुणाग्ने परिव्ययामसि ॥ पावको अस्मभ्यंठं० शिवो भव ॥ २ ॥ ॐ उपज्मन्नुपवेतसे वतरनदीष्वा ॥ अग्ने पित्तमपामसि मण्डूकिताभिरागहि सेमन्नो यज्ञम्पावकवर्ण्णंठं० शिवङ्कृधि

॥ ३ ॥ ॐ अपामिदन्न्ययनर्ठ० समुद्रस्य निवेशनम् ॥ अन्न्याँ-
५० स्तेऽअस्म्मत्तपन्तु हेतय÷पावकोऽअस्म्मभ्भ्यर्ठ० शिवो भव ॥४॥ १०
७४ ॐ अग्ने पावकरोचिषा मन्द्रया देव जिह्वया ॥ आदेवान्वक्षि
यक्षि च ॥ ५ ॥ ॐ स न÷पावक दीदिवोग्ग्ने देवाँ २ ॥ ऽइहा-
वह ॥ उपयज्ञर्ठ० हविश्श्च नः ॥ ६ ॥ ॐ पावकया यश्च्चितय-
न्त्यात्कृपाक्षा मन्न्रुरुचऽउषसोन भानुना ॥ तूर्व्वन्नया मन्नेत-
शस्यनूरणऽआयो घृणेन तं तृषाणोऽअजर÷ ॥ ७ ॥ ॐ नमस्तेऽह- ७४

रसे शोचिषे नमस्तेऽअस्त्वर्चिषे ॥ अन्याँस्तेऽअस्मत्तपन्तु हेतयः
पावकोऽअस्मभ्यं शिवो भव ॥ ८ ॥ ॐ नृषदे वेड् प्सुषदे वेड् बर्हि
षदे वेड् वनसदे वेट् स्वर्विदे वेट् ९ ॐ ये देवा देवानां यज्ञिया यज्ञिया
नाᳬ संवत्सरीणमुप भागमासते ॥ अहुतादो हविषो यज्ञेऽअस्मि
न्स्वयम्पिबन्तु मधुनो घृतस्य ॥ १० ॥ ॐ ये देवा देवेष्वधिदेवत्वमा
यन्ये ब्रह्मणः पुरऽएतारोऽअस्य ॥ येभ्यो नऽऋते पवते धाम किञ्च
न न ते दिवो न पृथिव्याऽअधिस्नुषु ॥ ११ ॥ ॐ प्राणदाऽअपा

नदा व्यानदावर्चोदा वरिवोदाः ॥ अन्याँस्तेऽअस्मत्तपन्तु
हेतयः पावकोऽअस्मभ्यंॅठ० शिवो भव ॥ १२ ॥ इति अग्न्युत्तारणं
कृत्वा ॥ प्राणप्रतिष्ठां कुर्यात् ॥ तद्यथा ॥ प्रतिमां हस्तेन संस्पृश्य
बीजमंत्रान् जपेत्॥ॐ आँह्रींक्रौं यंरं लं वंशं षं संहं सः अस्य मूर्तौप्राणाः
इह प्राणाः॥ पुन आं ह्रीं० सः० अस्य मूर्तौ जीव इह स्थितः॥पुनः॥
आं ह्रीं० सः० अस्य मूर्तौ सर्वेन्द्रियाणि वाङ्मनस्त्वक्चक्षुः
श्रोत्रजिह्वाघ्राणपाणीपादपायूपस्थानि इहैवागत्य सुखं चिरं तिष्ठन्तु

स्वाहा ॥ अस्यै प्राणाः प्रतिष्ठन्तु० ॥ ॐ मनो जूतिरिति प्रतिष्ठां कृत्वा पूजयेत् ॥ इत्यग्न्युत्तारणविधिः प्राणप्रतिष्ठा च समाप्ता॥

अस्मिन् ग्रहशांत्याख्ये कर्मणि पञ्चभूःसंस्कारपूर्वकमग्निस्थापनं करिष्ये॥ अथ पञ्चभूसंस्कारः ॥ कुशैः परिसमुह्य तान्कुशानैशान्यां परित्यज्य १ गोमयोदकाभ्यामुपलिप्य २ स्रुवेणोल्लिख्य ३ अनामिकाङ्गुष्ठेनोद्धृत्य ४ जलेनाभ्युक्ष्य ५, ॐ अग्निदूतं पुरोदधे हव्यवाहमुपब्रुवे ॥ देवाँऽआसादयादिह ॥ इत्यग्निं स्थापयेत् ॥

टि० (१) मानवसंहितायाम् ॥ कर्तुः शास्त्रोक्तमार्गेण आचार्यस्याथवा पुनः ॥ कुर्यादग्निप्रणयनं हवनादिविधीन् तथा ॥

अथ सूर्यादिग्रहाणां स्थापनक्रमः ॥ स्कान्दे ॥ ईशाने मण्डलं कृत्वा ग्रहाणां स्थापनं ततः ॥ वृत्तमंडलमादित्यमर्धचन्द्रं निशाकरम् ॥ त्रिकोणं मङ्गलं चैव बुधं च धनुषाकृतिम् ॥ गुरुमष्टदलं प्रोक्तं चतुष्कोणं च भार्गवम् ॥ नराकृतिं शनिं विन्द्याद्राहुं च मकराकृतिम् ॥ केतुं खड्गसमं ज्ञेयं ग्रहमंडलके शुभे ॥१॥ अथ प्रकारान्तरम् ॥ वृत्तमण्डलमादित्यं चतुरस्रं निशाकरम् ॥ त्रिकोणं मङ्गलं चैव बुधं वै वाणसन्निभम ॥ गुरवे पट्टिशाकारं पञ्चकोणं भृगुस्तथा ॥ मन्दे च

धनुषाकारं सूर्पाकारन्तु राहवे ॥ केतवे च ध्वजाकारं मण्डलानि
क्रमेण तु ॥ शुक्रार्कौ प्राङ्मुखौ ज्ञेयौ गुरुसौम्यावुदङ्मुखौ ॥प्रत्य-
ङ्मुखौ शनीसोमौ शेषा दाक्षिणतो मुखाः ॥ मध्ये तु भास्करं
विंद्याच्छशिनं पूर्वदाक्षिणे ॥ दाक्षिणे लोहितं विद्याद्बुधं पूर्वोत्तरेण तु॥
उत्तरेण गुरुं विंद्या त्पूर्वेणैव तु भार्गवम् ॥ पश्चिमे तु शनिं विन्द्याद्राहुं
दाक्षिणपश्चिमे ॥ पश्चिमोत्तरतः केतुं इत्येषा ग्रहसंस्थितिः ॥ आदि
त्याभिमुखास्सर्वे साधिप्रत्यधिदेवताः ॥ अधिदेवता दाक्षिणे वामे

 प्रत्यधिदेवता: ॥ अरुणौ सूर्यभौमौ च श्वेतशुक्रौ निशाकरौ ॥ 
 हरितवर्णौ बुधश्चैव पीतवर्णौ गुरुस्तथा ॥ कृष्णवर्णाः शनीराहु
केतवस्तुतथैव च॥ ततः पूर्वनिर्मितहस्तमात्रं चतुरस्रं ग्रहवेद्यां श्वेत-
वस्त्रं प्रसार्य नवग्रहमण्डलं विलिख्य मध्यादिकोष्ठेषु उक्तदिक्षु
विदिक्षु सूर्यादिग्रहाणां स्थापनं पूजनं च कुर्यात् ॥ अथ सूर्या-
द्यावाहनं ॥ जपाकुसुमसंकाशं काश्यपेयं महाद्युतिम् ॥ तमोऽरिं 
सर्वपापघ्नं सूर्यमावाहयाम्यहम ॥ ॐ आकृष्णेनरजंसावर्तमानो

निवेशयन्नमृतं मर्त्यञ्च ॥ हिरण्ययेनसविता रथेनादेवोयातिभुव
नानिपश्यन् ॥ ॐ भूर्भुवः स्वः कलिङ्गदेशोद्भवकाश्यपसगोत्र
रक्तवर्ण भो सूर्य इहागच्छ इह तिष्ठ सूर्याय नमः ॥ सूर्यमावाह-
यामि स्थापयामि ॥१॥ दधिशंखतुषाराभं क्षीरोदार्णवसंभवम् ॥
ज्योत्स्नापतिं निशानाथं सोममावाहयाम्यहम् ॥ इमंदेवाऽअसप
त्नꣳसुवद्ध्वम्महतेक्षत्रायमहतेज्यैष्ठ्यायमहतेजानराज्यायेन्द्र-
स्येंद्रियाय॥ इमममुष्यपुत्रममुष्यैपुत्रमस्यैविशऽएषवोमीराजा

ग्र० सोमोऽस्माकंब्राह्मणाना ँ राजा ॥ ॐ भू० यमुनातीरोद्भव ग्र०
७८ आत्रेयसगोत्र शुक्लवर्ण भो सोम इहागच्छ इह तिष्ठ सोमाय नमः ॥
सोममावाहयामि स्थापयामि ॥ २ ॥ धरणीगर्भसंभूतं विद्युत्तेज-
स्समप्रभम् ॥ कुमारं शक्तिहस्तं च भौममावाहयाम्यहम् ॥ ॐ
अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्या ऽअयम् ॥ अपा ँ रेता ँ सि जि
न्वति॥ ॐ भू० अवंतिकापुरोद्भव भारद्वाजसगोत्र रक्तवर्ण भो भौम ७८
इ० भौमाय० भौम०॥३॥ प्रियंगुकलिकाभासं रूपेणाप्रतिमं बुधं॥

सौम्यं सौम्यगुणोपेतं बुधमावाहयाम्यहम् ॥ ॐ उद्बुध्यस्वाग्ने प्रतिजागृहि त्वमिष्टापूर्ते सꣳसृजेथामयं च ॥ अस्मिन्त्सधस्थेऽअध्युत्तरस्मिन्विश्वेदेवायजमानश्च सीदत ॥ ॐ भू० मगधदेशोद्भव आत्रेयसगोत्र हरितवर्ण भो बुध इ० बुधाय० बुधमा० ॥४॥

देवानां च मुनीनां च गुरुं कांचनसन्निभम् ॥ वंद्यभूतं त्रिलोकानां गुरुमावाहयाम्यहम् ॥ ५ ॥ ॐ बृहस्पतेअतियदर्योऽअर्हाद्द्युमद्विभाति क्रतुमज्जनेषु ॥ यद्दीदयच्छवसऽऋतप्रजाततदस्मासुद्रविणं

ग्र०

७६ न्धेहिचित्रम् ॥ ॐ भू० सिंधुदेशोद्भव आंगिरसगोत्र पीतवर्ण भो प्र०
बृहस्पते इ० बृहस्पतये नमः बृहस्पति० ॥५॥ हिमकुन्दमृणा-
लाभं दैत्यानां परमं गुरुम् ॥ सर्वशास्त्रप्रवक्तारं शुक्रमावाहया-
म्यहम ॥ ॐ अन्नात्परिस्नुतो रसंब्रह्मणाव्यपिबत्क्षत्रं पय ं सो
मंप्रजापतिं ं ॥ ऋतेन सत्यमिन्द्रियंविपानंठं. शुक्रमंधसइन्द्र
स्येन्द्रियमिदंपयोमृतंमधु ॥ ॐ भू० भोजकटदेशोद्भव भार्गव- ७६
सगोत्र शुक्लवर्ण भो शुक्र इ० शुक्राय नमः ॥ शुक्रं० ॥ ६ ॥

नीलाम्बुजसमाभासं रविपुत्रं यमाग्रजम् ॥ छायामार्तण्डसम्भूतं
शनिमावाहयाम्यहम् ॥ ॐ शन्नो देवीरभिष्टय ऽआपोभवन्तुपीतये ॥
शंय्योरभिस्रवंतुनः ॥ ॐ भू० सौराष्ट्रदेशोद्भव काश्यपसगोत्र
कृष्णवर्ण भो शनैश्चर इ० शनैश्चराय नमः ॥ शनैश्चर० ॥७॥
अर्द्धकायं महावीर्यं चन्द्रादित्यविमर्दनम् ॥ सिंहिकागर्भसंभूतं
राहुमावाहयाम्यहम् ॥ ॐ कयानश्चित्र ऽआभुवदूतीसदावृधः
सखा ॥ कयाशचिष्ठयावृता ॥ ॐ भू० राठिनापुरोद्भव पैठिनस-

प्र० गोत्र कृष्णवर्ण भो राहो इ० राहवे नमः ॥ राहुं० ॥ ८॥ पालास
८० धूम्रसंकाशं तारकाग्रहमस्तकम् ॥ रौद्रं रौद्रात्मकं घोरं केतुमा- प्र०
वाहयाम्यहम् ॥ ॐ केतुंकृण्वन्नकेतवेपेशोमर्याऽअपेशसे ॥ स-
मुखद्भिरजायथाः ॥ ॐ भू० अंतर्वेदिसमुद्भव जैमिनिसगोत्र
कृष्णवर्ण भो केतो इ० केतवे नमः॥ केतुं०॥९॥ ततोऽधिदेवता-
स्थापनं ग्रहदक्षिणपार्श्वे । पंचवक्त्रं वृषारूढमुमेशञ्च त्रिलोच- ८०

(१) स्कान्दे ॥ शिवः शिवा गुहो विष्णुर्ब्रह्मेन्द्रयमकालकाः । चित्रगुप्तोऽथ भान्वादिदक्षिणे चाधिदेवताः ॥

नम् ॥ आवाहयामीश्वरन्तं खट्वाङ्गवरधारिणम् ॥ ॐ त्र्यंबकंय
जामहे सुगंधिम्पुंष्टिवर्द्धनम्॥उर्वारुकमिंवबन्धंनान्मृत्योर्मुक्षीयमा
मृतात् ॥ ॐ भू० ईश्वर इहा० ईश्वराय नमः ॥ ईश्वरं० ॥ १ ॥
हेमाद्रितनयां देवीं वरदां शंकरप्रियाम् ॥ लम्बोदरस्य जननीमुमा-
मावाहयाम्यहम्॥ ॐश्रीश्चते० ॐ भू० उमेहा० उमायै नमः॥
उमां० ॥ २ ॥ रुद्रतेजस्समुत्पन्नं देवसेनाग्रगं विभुम् ॥ षण्मुखं
कृत्तिकासूनुं स्कन्दमावाहयाम्यहम् ॥ ॐ यदक्रन्दः प्रथमं जा-

प्र० यमानऽउद्यन्त्समुद्रादुतवापुरीषात् ॥ श्येनस्य पक्षाहरिणस्यबाहू प्र०
८१ उपस्तुत्यम्महियातन्तेऽअर्व्वन् ॥ ॐ भू० स्कन्देहा० स्कन्दाय नमः ॥
स्कन्दं ॥३॥ देवदेवं जगन्नाथं भक्तानुग्रहकारकम् ॥ चतुर्भुजं रमानाथं
विष्णुमावाहयाम्यहम् ॥ ॐ व्विष्णोरराटमसिव्विष्णोःश्नप्त्रेस्थो
व्विष्णोःस्यूरसिव्विष्णोर्ध्रुवोसि ॥ वैष्णवमसिव्विष्णवेत्वा ॥ ॐ
भू० विष्णो इ० विष्णवे नमः ॥ विष्णु० ॥४॥ कृष्णाजिनाम्बरधरं ८१
पद्मसंस्थं चतुर्मुखम् ॥ वेदाधारं निरालम्बं विधिमावाहयाम्यहम् ॥

ॐ आब्रह्मन्ब्राह्मणोब्रह्मवर्च्चसीजायतामाराष्ट्रेराजन्यः शूरऽइषव्यो ऽतिव्याधीमहारथोजायतांदोग्ध्री धेनुर्वोढानड्वानाशुः सप्तिःपुरं-ध्रियोषाजिष्णूरथेष्ठाः सभेयोयुवास्य यजमानस्य वीरोजायता न्निकामे निकामे नः पर्ज्जन्योवर्षतुफलवत्योनऽओषधयः पच्य-न्तां योगक्षेमोनः कल्पताम् ॥ ॐ भू० ब्रह्मन् इ० । ब्रह्मणे नमः ॥ ब्रह्माण० ॥५॥ देवराजं गजारूढं शुनासीरं शतक्रतुम् ॥ वज्रहस्तं महाबाहुमिन्द्रमावाहयाम्यहम् ॥ ॐ सयोषाऽइन्द्रस-

गणोमरुद्भिः सोमंपिबवृत्रहा शूराविद्वान् ॥ जहिशत्रूँ रपमृधो-
नुदस्वाथाभयङ्कृणुहि विश्वतोनः ॐ भू० इन्द्रेहा० इन्द्राय नमः॥
इन्द्रं० ॥ ६ ॥ धर्मराजं महावीर्यं दक्षिणादिक्पतिं प्रभुम् ॥
रक्तेक्षणं महाबाहुं यममावाहयाम्यहम् ॥ॐ यमायत्वाङ्गिरस्वते
पितृमते स्वाहा ॥ स्वाहा घर्म्माय स्वाहा घर्मः पित्रे ॥ ॐ भू०
यम इ० यमाय नमः॥ यमं० ॥७॥ अनाकारमनन्ताख्यं वर्त्त-
मानं दिने दिने ॥ कलाकाष्ठादिरूपेण कालमावाहयाम्यहम् ॥

प्र० ८२

कार्षिरसि समुद्रस्य त्वाक्षित्या ऽउन्नयामि ॥ समापोऽअद्भिरग्मत स
मोषधीभिरोषधीः ॥ ॐ भू० कालेहा० कालायनमः ॥ काल-
म्० ॥ ८ ॥ धर्मराजसभासंस्थं कृताकृतविवेकिनम् ॥ आवाह-
येच्चित्रगुप्तं लेखनीपत्रहस्तकम् ॥ ॐ चित्रावसोस्वस्तितेपार-
मंशीय ॥ ॐ भू० चित्रगुप्तेहा० चित्रगुप्ताय नमः ॥ चित्रगु-
प्तम्० ॥ ९ ॥ ततः प्रत्यधिदेवतास्थापनं ग्रहवामपार्श्वे ॥ रक्तमा-

टि० १ स्कान्दे । अग्निरापोधरा विष्णुः शक्रेन्द्राणी पितामहाः ॥ पन्नगार्कः क्रमाद्वामे ग्रहप्रत्यधिदेवताः ।

प्र० ल्याम्बरधरं रक्तपद्मासनस्थितम् ॥ वरदाभयदन्देवमग्निमावाह- प्र०
८३ याम्यहम् ॥ ॐ अग्निदूतं पुरोदधे हव्यवाहमुपब्रुवे ॥ देवाँ२॥ऽ
आसादयादिह ॥ ॐ भू० अग्ने इ० अग्नये नमः ॥अग्निम्०
॥१॥आदिदेवसमुद्भूता जगच्छुद्धिकराःशुभाः ॥ औषध्याप्याय-
नकरा अपामावाहयाम्यहम् । ॐ आपोहिष्ठा० ॐ भू० अप
इहागच्छत इह तिष्ठत अद्भ्यो नमः॥ अपः आ०॥२॥शुक्लवर्णां ८३
विशालाक्षीं कूर्मपृष्ठोपरिस्थिताम् ॥ सर्वसस्याश्रयां देवीं धरामावाह-

याम्यहम् ॥ ॐ स्योनापृथिवि० ॐ भू० पृथिवि इ० पृथिव्यै
नमः॥ पृथिवीं० ॥ ३ ॥ शंखचक्रगदापद्महस्तं गरुडवाहनम् ॥
किरीटकुण्डलधरं विष्णुमावाहयाम्यहम् ॥ ॐ इदंविष्णुर्विचंक्र
मेत्रेधानिदंधेपदम् ॥ समूंढमस्यपाꣳसुरेस्वाहा ॥ॐ भू० विष्णो
इ० विष्णवे नमः ॥ विष्णु० ॥ ४ ॥ ऐरावतगजारूढं सहस्राक्षं
शचीपतिम् ॥ वज्रहस्तं सुराधीशमिन्द्रमावाहयाम्यहम् । ॐ
इन्द्रंऽआसान्नेताबृहस्पतिर्दक्षिणायज्ञः पुरऽएंतुसोमः ॥ देवसे

प्र० नानांमाभिभंजतीनांजयंतीनांमुरुतोयंत्वग्रंम्॥ ॐ भू० इन्द्रेहा० प्र०

८४ इन्द्राय नमः॥इन्द्रमा०॥५॥ प्रसन्नवदनां देवा देवराजस्य वल्लभाम्॥

नानालंकारसंयुक्तां शचीमावाहयाम्यहम् । ॐअदित्यैरास्नासीन्द्रा

ण्याऽउष्णीषंः॥पूषासिघर्म्मायदीष्व॥ॐभू०इन्द्राणि इ०इन्द्राण्यै

नमः॥इन्द्राणीं०॥६॥आवाहयाम्यहं देवदेवेशं च प्रजापतिम्॥अनेक

व्रतकर्तारं सर्वेषां च पितामहम् ॥ ॐ प्रजापतेनत्वदेतान्यन्यो ८४

विश्वारूपाणिपरिताबभूव ॥ यत्कामास्तेजुहुमस्तन्नोऽअस्तुवयंस्

स्याम पतयो रयीणाम् ॥ ॐ भू० प्रजापते इ० प्रजापतये नमः ॥
प्रजापतिमा० ॥ ७ ॥ अनन्ताद्यान्महाकायान्नानामणिविराजि-
तान् ॥ आवाहयाम्यहं सर्प्पान्फणान्सप्तकमण्डितान् ॥ ॐ
नमोस्तु सर्पेभ्यो ये के च पृथिवीमनु॥येऽअन्तरिक्षे ये दिवि तेभ्यः
सर्पेभ्यो नमः ॐ भू० सर्पाः इहागच्छत इह तिष्ठत ॥ सर्प्पेभ्यो
नमः ॥ सर्पान्० ॥ ८ ॥ हंसपृष्ठसमारूढं देवतागणपूजितम् ॥
आवाहयाम्यहं देवं ब्रह्माणं कमलासनम् ॥ ॐ ब्रह्मयज्ञानं प्रथमं

पृ० पुरस्ताद्विसीमत ३ सुरुचो वेनऽआवः ॥ स बुध्न्याऽउपमाऽअस्य पृ०
८५ विष्ठाः सतश्च योनिमसतश्च विवः ॐ भू० ब्रह्मन् इ० ब्रह्मणे
नमः ॥ ब्रह्माणम्० ॥ १ ॥ ततो विनायकादिपंचलोकपालदेवता
वास्तोष्पतिं क्षेत्रपालं चावाहयेत् ॥ लम्बोदरं महाकायं गजवक्त्रं
चतुर्भुजम ॥ आवाहयाम्यहं देवं गणेशं सिद्धिदायकम् ॥ ॐ
गणानां त्वा० ॐ भू० गणपते इ० गणपतये नमः ॥ गणपतिं० ८५

१ टि० स्कान्दे—गणेशश्चाम्बिकावायुराकाशश्चाश्विनौ तथा । ग्रहाणामुत्तरे पंचलोकपालाः प्रकीर्तिताः ॥

॥१॥ पत्तने नगरे ग्रामे विपिने पर्वते गृहे ॥ नानाजातिकुलेशानीं दुर्गामावाहयाम्यहम् ॥ ॐ अम्बेऽअम्बिके० ॐ भू० दुर्गे इ० दुर्गायै नमः ॥ दुर्गां० ॥२॥ आवाहयाम्यहं वायुं भूतानां देहधारिणम् ॥ सर्वाधारं महावेगं मृगवाहनमीश्वरम् ॥ ॐ वायोऽयेते सहस्त्रिणोरथासस्तेभिरागंहि ॥ नियुत्वान्सोमंपीतये। ॐ भू० वायो इ० वायवे नमः ॥ वायुं० ॥३॥ अनाकारं शब्दगुणं द्यावाभूम्यान्तरस्थितम् ॥ आवाहयाम्यहं देवमाकाशं सर्वगं शुभम् ॥ ॐ घृतं घृतपावानः

अ० पपिबत वसां वसापावानः पिबतान्तारिक्षस्य हविरसि स्वाहा ॥ दिशः
२:६ प्रदिशऽआदिशो विदिशऽउद्दिशो दिग्भ्यः स्वाहा । ॐ भू० आ- प्र०
काशाय नमः ॥ आकाशं० ॥४॥ देवतानां च भैषज्ये सुकुमारौ
भिषग्वरौ ॥ आवाहयाम्यहं देवावश्विनौ पुष्टिवर्द्धनौ ॥ ॐ यावां
कशामधुमत्यश्विना सूनृतावती ॥ तया यज्ञंमिमिक्षतम् ॥ ॐ भू०
अश्विनौ इहागच्छतां० इह तिष्ठतां अश्विभ्यां नमः ॥ आश्विनौ =६
आवाहयामि० ॥५॥ वास्तोष्पतिं विदिक्कार्यं भूशय्याभिरतं प्रभुम् ॥

आवाहयाम्यहं देवं सर्वकर्मफलप्रदम् ॥ ॐ वास्तोष्पतेप्रतिजानीह्य-
स्मान्स्वावेशोऽअनमीवोभवानः ॥ यत्वेमहेप्रतितन्नोजुषस्वशन्नो
भव द्विपदेशं चतुष्पदे॥ॐ भू० वास्तोष्पते इ० वास्तोष्पतये नमः॥
वास्तोष्पतिं०॥६॥भूतप्रेतपिशाचाद्यैरावृतं शूलपाणिनम्॥आवाहये
क्षेत्रपालंकर्मण्यस्मिन्सुखायनः॥ॐनहिस्पशमविदन्नन्यमस्माद्वै-
श्वानरात्पुरऽएतारमग्नेः॥एमेनमवृधन्नमृताऽअमर्त्यंवैश्वानरंक्षै-
त्रजित्यायदेवाः॥ॐ भूक्षेत्राधिपतेइ०क्षेत्राधिपतयेनमः॥क्षेत्राधि-

म० तिमावा०॥७॥अथमण्डलाद्वाह्योदशदिक्पालानावाहयेत्॥इन्द्रंसुर-
८७ पतिश्रेष्ठं वज्रहस्तं महाबलम्॥आवाहये यज्ञसिद्ध्यै शतयज्ञाधिपं प्र- १०
भुम्॥ ॐत्रातारमिन्द्रमवितारमिन्द्रꣳहवेहवेसुहवꣳशूरमिन्द्रम्॥
ह्वयामि शक्रंपुरुहूतमिन्द्रꣳस्वस्तिनोमघवाधात्विन्द्रः॥ ॐ भू०
इन्द्रेहा०इन्द्राय नमः॥इन्द्रं॥१॥त्रिपादं सप्तहस्तं चद्विमूर्द्धानं द्विना-
सिकम्॥ षण्नेत्रं च चतुःश्रोत्रमग्निमावाहयाम्यहम्॥ ॐ त्वन्नोऽअ- ८७

---

१ टि० संग्रहेइन्द्रो–वह्निः पितृपतिर्नैऋतो वरुणो मरुत्॥ कुबेर ईशो ब्रह्मा च ह्यनन्तो दश दिक्पतिः॥

ग्नेतवंदेवपायुभिर्मघोनोरक्षतन्वश्चवन्द्य॥ त्रातातोकस्यतनयेगवाम्
स्यनिमेषठं.रक्षमाणस्तवंव्रते। ॐ भू० अग्ने इ० अग्नये नमः॥अग्नि०
॥२॥महामहिषमारूढं दंडहस्त महाबलम्॥ यज्ञसंरक्षणार्थाय यम-
मावाहयाम्यहम् ॥ ॐ यमाय त्वांगिरस्वते पितृ० ॐ भू० यमेहा०
यमाय नमः॥ यम० ॥३॥ सर्वप्रेताधिपं देवं निर्ऋतिं नीलविग्रहम्॥
आवाहये यज्ञसिद्धचै नरारूढं वरप्रदम्॥ ॐ असुन्वंतमयजमान-
मिच्छस्तेनस्येत्यामन्विहितरकरस्य ॥ अन्यमस्मादिच्छसातऽ

इत्यानमोदेवि निर्ऋते तुभ्यमस्तु॥ ॐ भू० निर्ऋतये नमः॥ निर्ऋ-
तिं० ॥४॥ शुद्धस्फटिकसंकाशं जलेशं यादसां पतिम्॥ आवाहये
प्रतीचीशं वरुणं सर्वकामदम्॥ ॐ तत्त्वायामि० ॐ भू० वरु-
ण इ० वरुणाय नमः॥ वरुणं० ॥५॥ मनोजवं महातेजं सर्वत-
श्चारिणं शुभम्॥ यज्ञसंरक्षणार्थाय वायुमावाहयाम्यहम्॥ ॐ
आनोनियुद्भिः शतिनीभिरध्वरꣳ सहस्रिणीभिरुपयाहि यज्ञम्॥
वायोऽअस्मिन्त्सवने मादयस्व यूयम्पात स्वस्तिभिः सदा नः॥ ॐ

भू० वायो इ० वायवे नमः ॥ वायुं० ॥६॥ आवाहयामि देवेशं धनदं यक्षपूजितम् ॥ महाबलं दिव्यदेहं नरयानगतिं विभुम् ॥ ॐ वयठं. सोमं व्रते तव मनस्तनूषु विभ्रतः ॥ प्रजावन्तः सचेमहि ॥ ॐ भू० सोमेहा० सोमाय नमः ॥ सोमं० ॥ ७ ॥ सर्वाधिपं महादेवं भूतानां पतिमव्ययम् ॥ आवाहये तमीशानं लोकानामभयप्रदम् ॥ ॐ तमीशानं ज० ॐ भू० ईशानेहा० ईशानाय नमः ॥ ईशानं० ॥ ८ ॥ पद्मयोनिं चतुर्मूर्तिं वेदगर्भं पितामहम् ॥ आवाहयामि

प्र० ब्रह्माणं यज्ञसंसिद्धिहेतवे ॥ ॐ अस्मेरुद्रामेहनापर्व्वतासोवृत्रह- प्र०
८६ त्येभरहूतौसजोषाः ॥ यः शंठ.संते स्तुवतेधायिपज्र्रऽइन्द्रज्येष्ठाऽ
अस्माँ२ऽअवन्तु देवाः॥ पूर्वेशानयोर्मध्ये ॐ भू० ब्रह्मन्० ब्रह्मणे
नमः ॥ ब्रह्माणं० ॥९॥अनन्तं सर्वनागानामधिपं विश्वरूपिणम् ॥
जगतां शांतिकर्तारं मंडले स्थापयाम्यहम्॥ ॐ स्योनापृथिवि०॥
निर्ऋतिपश्चिमयोर्मध्ये ॥ ॐ भू० अनन्तेहा०अनन्ताय नमः॥ ८१
अनन्तं० ॥ १० ॥ अस्यै प्राणाः प्रतिष्ठन्तु अस्यै प्राणाः क्षरन्तु

च॥अस्यै देवत्वमर्चायै मामहेति च कश्चन॥ ॐ मनोजूतिर्जु०
ॐ सूर्यादिअनन्तांतदेवताः सुप्रतिष्ठिताः वरदाः भवन्तु॥सूर्यादि
अनन्तान्तदेवताभ्यो नमः इति मन्त्रेण आसनाद्युपचारैः प्रत्येक-
मेकत्र वा कांडानुसमयेन पदार्थानुसमयेन वा षोडशोपचारैः
संपूज्य प्रार्थयेत॥ ब्रह्मा मुरारिस्त्रिपुरांतकारी भानुः शशी भूमि-
सुतो बुधश्च॥ गुरुश्च शुक्रः शनिराहुकेतवः सर्वे ग्रहाः शान्तिकरा
भवन्तु ॥ ११ ॥ ग्रहाऽऊर्जाहुतयो व्यन्तो विप्राय मतिम्॥

तेषांविशिंप्रियाणांद्बोहमिषमूर्जंठं. समग्रभमुपयामगृहीतोऽसीन्द्रा-
यत्वाजुष्टंगृह्णाम्येषतेयोनिरिन्द्रायत्वाजुष्टंतमम् ॥ इति प्रार्थना ॥
अनया पूजया सूर्यादिअनन्तान्तदेवताः प्रीयन्ताम् ॥ ततो गृह-
स्येशानदिग्भागे कलशस्थापनविधिना रुद्रकलशं संस्थाप्य कल-
शे वरुणं असंख्यातरुद्रांश्चावाह्य पूजयेत् ॥ तद्यथा ॥ ॐ असं-
ख्याता सहस्राणि ये रुद्राऽअधिभूम्याम् ॥ तेषां० सहस्रयोजनेवध-
न्वानितन्मसि ॥ असंख्यातरुद्रेभ्यो नमः असंख्यातरुद्रानावा० ॥

## * अथ कुशकण्डिकाकरणम् *

अग्नेर्दक्षिणतो ब्रह्मासनम् ॥ अग्नेरुत्तरतः प्रणीतासनद्वयम् ॥ ब्रह्मासने ब्रह्मोपवेशनम्[1] ॥ यावत्कर्म समाप्यते तावत्त्वं ब्रह्मा भव इति यजमानः ॥ भवामीति ब्रह्मा वदेत् ॥(ब्रह्मणानुज्ञातः[2] प्रणीताप्रणयनम्[3] ) ( तत्र क्रमः ) प्रणीतापात्रं पुरतः कृत्वा वारिणा

टि० १ पंचाशता भवेद्ब्रह्मा तदर्द्धेन तु विष्टरः । ऊर्ध्वकेशो भवेद्ब्रह्मा लम्बकेशस्तु विष्टरः ॥ दक्षिणावर्तो ब्रह्मा च वामावर्तस्तु विष्टरः ॥ विष्टरं सर्वयज्ञेषु लक्षणं परिकीर्तितम् ॥ २ ब्रह्मणा प्राप्तानुशासनः—ब्रह्माकी आज्ञासे ॥ ३ प्रणीताको जल से पूर्ण करना ॥

प्र० परिपूर्य कुशैराच्छाद्य प्रथमासने निधाय ब्रह्मणो मुखमवलोक्य प्र०
११ द्वितीयासने निदध्यात् ( ईशानादिपूर्वाग्रैः कुशैः परिस्तरणम् )
तद्यथा ॥ ततो वर्हिषश्चतुर्थभागमादाय ॥ आग्नेयादीशानान्तम् ॥
ब्रह्मणोऽग्निपर्यन्तं ॥ नैर्ऋत्याद्वायव्यान्तं ॥ अग्नितः प्रणीतापर्यंतं
( अथ पात्रासादनं पश्चादुत्तरतो वा स्यात् ) तद्यथा ॥ त्रीणि[2]
पवित्रे[3] द्वे ॥ प्रोक्षणीपात्रं ॥ आज्यस्थाली ॥ चरुस्थाली ॥ संमार्जन[4] ११

---

१ एकाशीतिकुशो वर्हिः ॥ चतुःषष्टिकुशो वर्हिः मुष्टिमात्रं कुशो वर्हिः ॥

२ पवित्रच्छेदनार्थं कुशत्रयम् । ३ पवित्रकरणार्थं साग्रमनन्तर्गर्भं कुशपत्रद्वयम् । ४ व्यासस्मृतौ—स्रुवसम्माजनार्थन्तु कुशत्रयमुदीरितमिति ॥

कुशाः पंच ॥ उपयमेन[1]कुशाः सप्त ॥ समिधस्तिस्रः ॥ स्रुवः ॥ आज्यम् ॥ तण्डुलाः ॥ पूर्णपात्रम् ॥ वृषनिष्क्रयदक्षिणा ॥ उपकल्पनीयानि द्रव्याणि निधाय ( पवित्रच्छेदनानि ) द्वयोरुपरि त्रीणि निधाय ॥ द्वौ मूलेन प्रदक्षिणीकृत्य ॥ त्रिभिश्छिन्द्य ॥ द्वौ ग्राह्यौ त्रिस्त्याज्यः ॥ प्रोक्षणीपात्रे प्रणीतोदकमासिच्य (त्रिः पूर्ण[2]) पवित्राभ्यामुत्पवनम्[3] ॥ प्रोक्षण्याः सव्यहस्तकरणम् ॥ दक्षिणेनोद्दिङ्ग

१ तत्रैव ॥ उपयमनार्थमाख्याता त्रिषण्णवमिताः कुशाः ॥ वेणीरूपा निरोधार्था निरोधे वहुभिः सुखमिति ॥
२ टि० सपवित्रकरेण प्रणीतोदकं त्रिः प्रोक्षणीपात्रे निधानम् ॥ ३ द्वाभ्यां अनामिकाङ्गुष्ठाभ्यां गृहीतपवित्राभ्याम् ॥

प्र० नम् ॥ प्रणीतोदकेन प्रोक्षणीप्रोक्षणम् ॥ प्रोक्षण्युदकेन आज्यस्था-
१२ ल्याः प्रोक्षणम् ॥ चरुस्थाल्याः प्रो० ॥ संमार्जनकुशानां प्रो० ॥ प्र०
उपयमनकुशानां प्रो० ॥ समिधां प्रो० ॥ स्रुवस्य प्रो० ॥ आज्य-
स्य प्रो० ॥ तण्डुलानां प्रो० ॥ पूर्णपात्रस्य प्रो० ॥ उपकल्पनीया-
नां पदार्थानां प्रो० ॥ असंचरे[1] प्रोक्षणीर्निधाय ॥ आज्यस्थाल्या-
माज्यनिर्वापः ॥ चरुस्थाल्यां प्रणीतोदकासेकपूर्वकं तण्डुलप्रक्षेपः ॥ १२

१ टि० प्रणीताग्न्योर्मध्ये असंचरदेशः ( अर्थात् जनसंचारवर्जितदेशे )

ब्रह्मादक्षिणत आज्याधिश्रयणम् ॥ चरोरधिश्रयणं स्वयमाज्य स्योत्तरतः ॥ ज्वलदुल्मुकेनोभयोः पर्यग्निकरणम् ॥ इतरथावृत्तिः ॥ उदकोपस्पर्शः ॥ अर्धाश्रिते चरौ अधोमुखस्य स्रुवस्य प्रतपनं ॥ संमार्जनकुशैः स्रुवस्योर्ध्वमुखस्य संमार्जनम्॥अग्नेरन्तरतो मूलैर्वा-ह्यतः स्रुवं सम्मृज्य ॥ प्रणीतोदकेनाभ्युक्षणम् ॥ संमार्जनकुशाना-मग्नौ प्रक्षेपः ॥ पुनः प्रतपनं दक्षिणदेशे निधानम्॥ आज्योद्वास-नम्॥ चरुं पूर्वेणानीयाग्नेरुत्तरतः स्थापयेत् ॥ चरोरुद्वासनं ॥ अग्ने-

रुत्तरत एवाज्यस्य प्रदक्षिणीकृत्य आज्यस्योत्तरतश्चरुं स्थापयेत् ॥ आज्योत्पवनम् ॥ आज्यावेक्षणम् ॥ अपद्रव्यनिरसनम् ॥ पुनः प्रोक्षण्युत्पवनम् ॥ वामहस्ते उपयमनकुशानादाय॥ उत्तिष्ठसमिधोभ्याधाय घृताक्तसमिधस्तिस्रः अग्नौ क्षिपेत् ॥ प्रोक्षण्युदकेन सपवित्रहस्तेन ईशानादि अग्नेः प्रदक्षिणं पर्युक्षणम् इतरथावृत्तिः ॥ पवित्रयोः प्रणीतासु निधानम् ॥ दक्षिणंजान्वाच्य ॥ ब्रह्मणा कुशैरं



१ टि. अन्वारम्भे कृते होमे ब्रह्मणा दक्षिणे करे ॥ बहुकाष्ठैः समिन्धीयादर्चिष्मन्तं क्रियाक्षमम् ॥ १ ॥ भूरादिनवसुस्विष्टकृति स्वच्छे च तुष्टये ॥ अन्वारब्धो भवेत्तेषु सोऽन्वारम्भः कुशेन हि ॥ २ ॥

न्वारब्धः ॥ समिद्धतमे[1]ऽग्नौ स्रुवेण[2]ाज्यहोमः ॥ अग्नेरुत्तरभागे ॥ ॐ प्रजापतये स्वाहा ॥ इदं प्रजापतये न मम ॥ अग्नेर्दक्षिणभागे ॥ ॐ इन्द्राय स्वाहा ॥ इदमिन्द्राय न मम ॥ समिद्धतमे ॥ ॐ अग्नये स्वाहा ॥ इदमग्नये न मम ॥ ॐ सोमाय स्वाहा ॥ इदं सोमाय न मम ॥ ततः सूर्यादिग्रहाणां अधिदेवताप्रत्यधिदेवतागणपत्यादिपञ्चलोकपालवास्तोष्पतिक्षेत्रपालदेवतानां इन्द्रादिदशदिक्पालदेवतानां

---

१ टि० अतिप्रदीप्ताग्नौ ॥ २ स्रुवधारणार्थं कारिका ॥ अग्रमध्याच्च यन्मध्यं मूलमध्याच्च मध्यतः ॥ स्रुवं धारयते विद्वान् ज्ञातव्यं च सदा बुधैः ॥ स्रुवहोमे सदा त्यागः मोक्षणीपात्रमध्यतः ॥ पाणिहोमे त्यागो न ॥

च प्रत्येकं समि[1]त्तिल[2]चर्वा[3]ज्यद्रव्यैः अष्टोत्तरशतमष्टाविंशतिमष्टौ वा जुहुयात्॥संकल्पः॥अस्मिन्ग्रहशांतिकर्मणि वा अमुकाख्ये कर्मणि इमानि हवनीयद्रव्याणि या यायक्ष्माणदेवतास्ताभ्यस्ताभ्यो मया परित्यक्तं न मम ॥ यथा दैवतानि सन्तु॥ इति कुशकण्डिकाकरणम्॥

अथ सूर्यादिनवग्रहाणां प्रणवादिस्वाहांतहोममन्त्राः ॥

ॐ गणानांत्वा० धम् स्वाहा॥१॥ॐ अम्बेऽअ० नीम् स्वाहा॥२॥ॐ

टि० १ अर्कः पलाशः खदिरो ह्यपामार्गश्च पिप्पलः । औदुम्बरशमीदूर्वा कुशाश्च समिधो नव ॥

२ तिल्ली अथवा तिल चावल यव शर्करा घृत युक्त । तत्र प्रमाणम्—तिलार्धं तन्दुलाः प्रोक्ताः तन्दुलार्द्धं यवास्तथा॥ यवार्द्धं शर्करा प्रोक्ता आज्यभागचतुष्टयम् ॥ १ ॥ अथवा ॥ यवार्द्धं तन्दुलाः प्रोक्ताः तन्दुलार्द्धं तिलास्तथा ॥ तिलार्द्धं शर्करा प्रोक्ता आज्यभागचतुष्टयम् ॥२॥ ३ पायसम् ॥



प्र० १४

आकृष्णे० पश्यन् स्वाहा ॥१॥ ॐ इमन्देवा अ० राजा स्वाहा ॥२॥ ॐ अग्निर्मू० न्वति स्वाहा॥३॥ ॐ उद्बुध्य० सीदत स्वाहा ॥४॥ ॐ बृहस्प० चित्रम् स्वाहा ॥५॥ ॐ अन्नात्प० मधु स्वाहा ॥६॥ ॐ शन्नोदे० तुनःस्वाहा ॥७॥ ॐ कयान० वृता स्वाहा ॥८॥ ॐ केतुङ्कृ० यथा स्वाहा ॥९॥ ॐ त्र्यम्बकं० मृतात् स्वाहा॥१०॥ ॐ श्रीश्चते० इषाण स्वाहा ॥११॥ ॐ यदक्रन्दः० अर्वन् स्वाहा ॥१२॥ ॐ विष्णोरर० वेत्वा स्वाहा ॥१३॥ ॐ आब्रह्म० ताम्

प्र० स्वाहा ॥१४॥ ॐ सुजोषा० तोनः स्वाहा ॥ १५॥ ॐ समायु- प्र०
१५ त्वा० पित्रे स्वाहा ॥१६॥ ॐ कार्षिर० षधीः स्वाहा ॥१७॥ चि-
त्राव० शीयु स्वाहा ॥१८॥ ॐ अग्निन्दू० दिह स्वाहा ॥१९॥ आ-
पोहि० यचक्षसे स्वाहा ॥२०॥ ॐ स्योनापृ० प्रथाःस्वाहा॥२१॥
इदम्बि० सुरे स्वाहा ॥२२॥ इन्द्रऽआ० ग्रम् स्वाहा॥ २३ ॥ ॐ
अदित्यै० दीष्वस्वाहा ॥२४॥ ॐ प्रजापते० णाम् स्वाहा॥२५॥ १५
ॐ नमोस्तुस० नमः स्वाहा॥२६॥ ॐ ब्रह्मय० ब्रिवःस्वाहा॥२७॥

ॐ गुणानां० धम् स्वाहा ॥२८॥ ॐ अम्बेऽअ० नीम् स्वाहा॥२९॥
ॐ वायोंजेते० तथे स्वाहा ॥३०॥ घृतंघृत० दिग्भ्यः स्वाहा॥३१॥
ॐ यावांक० ताम् स्वाहा ॥३२॥ ॐ वास्तोष्पते० ष्पदे स्वाहा
॥३३॥ ॐ नुहिस्पश० देवाःस्वाहा ॥३४॥ ॐ त्रातारमि० त्विन्द्रः
स्वाहा॥३५॥ॐ त्वन्नो अग्ने० व्रते स्वाहा ॥३६॥ॐ सुमायुत्वा०
पित्रे स्वाहा ॥ ३७ ॥ ॐ असुन्वन्त० मस्तु स्वाहा ॥३८॥ ॐ
तत्त्वांया० मोंषीः स्वाहा ॥३९॥ ॐआनोंनि० दानः स्वाहा॥४०॥

प्र० ॐ वय ठं. सो० महि स्वाहा ॥४१॥ ॐ तमीशानं० स्तये स्वाहा प्र०
१६ ॥४२॥ ॐ अस्मेरुद्रा० देवाः स्वाहा ॥४३॥ ॐ स्योनापृं० प्रथाः
स्वाहा ॥४४॥ ततः प्रधानहोमः(प्रधानो विष्णुश्चेत्तदा इदं विष्णु-
रिति मंत्रेण ॥ शिवस्य नमस्ते रुद्र० अम्बिकायाः अम्बेऽअम्बिके
एवं गणपत्यादि प्रधानश्चेत्तदा तत्तन्मंत्रेण प्रधानहोमः कार्यः )
प्रधानहोमानन्तरं ब्रह्मादिमण्डलदेवताश्च एकैकयाज्याहुत्या यक्षे १६
शेषेण स्विष्टकृदादिहोमः ॥ तद्यथा ॥ ॐ अग्नेनयंसुपथा रायेऽ

अस्मान्विश्वानिदेवयुनानि विद्वान् ॥ युयोध्युस्मज्जुहुराणमे-
नोभूयिष्ठान्तेनमऽउक्तिंविधेम ॥१॥ ॐ स्वाहा स्वधायुताग्नये
वैश्वानराय नमः इति मंत्रेणाग्निं संपूज्य ॥ ततो हुतशेषद्रव्यं गृही-
त्वा ॥ ब्रह्मणान्वारब्धः स्विष्टकृद्धोमं कुर्यात् ॥ ॐ अग्नये स्वि-
ष्टकृते स्वाहा ॥ इदमग्नये स्विष्टकृते न मम ॥ इति हुतशेषाज्य-
स्य प्रोक्षणीपात्रे प्रक्षेपः ( ततो भूरादिनवाहुतयः ) ॐ भूः स्वा-
हा ॥ इदमग्नये न मम ॥ ॐ भुवः स्वाहा ॥ इदं वायवे न मम ॥

१७

ग्र ॐ स्वः स्वाहा ॥ इदं सूर्याय न मम ॥ ॐ त्वन्नोऽअग्ने वरुणस्य १०
१७ विद्वान्देवस्य हेडोऽअवयासिसीष्ठाः ॥ यजिष्ठो वह्नितमः शोशु-
चानो विश्वाद्वेषांꣳसि प्रमुमुग्ध्यस्मत् स्वाहा ॥ इदमग्नीवरुणा-
भ्यां न मम ॥ ॐ स त्वन्नोऽअग्नेऽवमो भवोती नेदिष्ठोऽअस्याऽउषसो-
व्युष्टौ ॥ अवयक्ष्व नो वरुणꣳ रराणो वीहि मृडीकꣳ सुहवो नऽएधि
स्वाहा ॥ इदमग्नीवरुणाभ्यां न मम ॥ ॐ अयाश्चाग्नेस्यनभि- १७
शस्तिपाश्च सत्यमित्त्वमयाऽअसि ॥ अयानो यज्ञं वहास्ययानो धे-

हविर्भेषजᳬं स्वाहा ॥ इदमग्नये अयसे न मम ॥ ॐ येते शतं वरुण
ये सहस्रं यज्ञियाः पाशा वितता महान्तः ॥ तेभिर्नोऽअद्य सवितोत
विष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्काः स्वाहा ॥ इदं वरुणाय सवित्रे
विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यश्च न मम ॥ ॐ
उदुत्तमं वरुणपाशमस्मदवाधमं विमध्यमᳬं श्रथाय ॥ अथा
वयमादित्यव्रते तवानागसोऽअदितये स्याम स्वाहा ॥ इदं वरुणा-
यादित्यायादितये न मम ॥ ॐ प्रजापतये स्वाहा ॥ इदं प्रजापतये

न मम। इति नवाहुतयः॥ ( अग्न्यायतनस्य समंतादिक्षु विदिक्षु
०ग्र च दशदिक्पालानां सदीपमाषभक्तबलयो देयाः ) तत्र क्रमः ॥ ॐ १०
१८ त्रातारमिन्द्र० त्विन्द्रः। इन्द्राय सांगाय सपरिवाराय सायुधाय
सशक्तिकाय एतं सदीपमाषभक्तबलिं समर्पयामि॥ भो इन्द्र स्वां
दिशं रक्ष बलिं भक्ष मम सकुटुम्बस्य सपरिवारस्य आयुःकर्ता क्षे-
मकर्ता शुभकर्ता शांतिकर्ता पुष्टिकर्ता तुष्टिकर्ता वरदो भव॥ १८
अनेन बलिदानेन इन्द्रः प्रीयताम्॥ एवं सर्वत्र॥१॥ ॐ त्वन्नो

अग्ने॰ अग्नये सां॰ ॥ भो अग्ने दिशं रक्ष बलिं॰ ॥ अ॰ अग्निः प्री॰
॥२॥ यमायत्वा॰ पित्रे ॥ यमाय सां॰ मि ॥ भो यम दि॰ बलिं॰ ॥
अ॰ यमः प्री॰ ॥ ३ ॥ ॐ असुन्वंतम॰ निर्ऋतये सां॰ बलिं॰
मि ॥ भो निर्ऋते दि॰ ॥ अ॰ निर्ऋतिः प्री॰ ॥४॥ ॐ तत्त्वायामि॰ षीः ॥ वरुणाय सां॰ भो वरुण दि॰ ॥ अ॰ वरुणः प्री॰ ॥५॥
ॐ आनोनियु॰ नः ॥ वायवे सां॰ मि॰ ॥ भो वायो दि॰ ॥ अ॰ वायुः
प्री॰ ॥ ६ ॥ ॐ व्वयठं. सोम॰ हि ॥ भो सोम दि॰ बलिं॰ ॥ अ॰

ग्र० सोमः प्री० ॥ ७ ॥ ॐ तमीशानं० ये ॥ ईशानाय सां० मि ॥ ग्र०
११ भो ईशान दि० ॥ अ० ईशानः प्री० ॥८॥ ॐ अस्मे रुद्रामे०
वाः ॥ ब्रह्मणेसां० मि०॥ भो ब्रह्मन् दि०॥अ० ब्रह्मा प्री० ॥९॥
ॐ स्योनापृ० प्रथाः। अनन्ताय सां० मि० ॥ भोअनन्तदि०
बलिं० ॥ अ० अनन्तः प्री० ॥१०॥ ततो ग्रहवेदीसमीपे ग्रहा-
दिभ्यः सदीपमाषभक्तबलयो देयाः ॥ ॐ आकृष्णेन० पश्यन् ११
॥ १ ॥ सूर्याय सांगाय सपरिवाराय सायुधाय सशक्तिकाय

ईश्वराग्निरूपाधिदेवताप्रत्यधिदेवतासहिताय एतं सदीपमाषभक्त बलिं समर्पयामि । भो सूर्य इमं बलिं गृहाण मम सकुटुम्बस्य सपरिवारस्य आयुःकर्ता क्षेमकर्ता शुभकर्ता शांतिकर्ता पुष्टिकर्ता तुष्टिकर्ता वरदो भव । अनेन बलिदानेन सूर्यः प्रीयताम् ॥१॥ ॐ इमन्दैवा० राजा॥ सोमाय सां० उमारूपाधिदेवताप्रत्यधिदे० मि । भोसोम इमं बलिं०। अने० सोमः प्री० ॥२॥ ॐ अग्निर्मू० ति । भौमाय सां० स्कंदभूमिरूपाधिदेवताप्रत्यधिदे० मि । भो भौम इमं बलिं० ॥

प्र० अनेन० भौमः प्री० ॥ ३ ॥ ॐ उद्बुध्यस्वा० त । बुधाय सां० प्र०
१०० नारायणविष्णुरूपाधिदेवताप्रत्यधिदेवतास० मि । भोबुध इमं
ब० । अनेन० बुधः प्री० ॥ ४ ॥ ॐ बृहस्पते० म् । बृहस्पतये
सां० ब्रह्मेन्द्ररूपाधिदेवताप्रत्यधिदे० मि । भोबृहस्पते इमंब०॥
अनेन० बृहस्पतिः प्री० ॥ ५ ॥ ॐ अन्नात्परि० धु । शुक्राय
सां० इन्द्रेन्द्राणिरूपाधिदेवताप्रत्यधिदे० मि । भोशुक्र इमं ब० । १००
अनेन० शुक्रः प्री० ॥ ६ ॥ ॐ शन्नोदेवी० नः । शनैश्चराय

सां० यमप्रजापतिरूपाधिदेवताप्रत्यधिदे० मि। भोशनैश्चर इमं
ब० ॥ अनेन० शनैश्चरः प्री० ॥ ७ ॥ ॐ कयानश्चि० ता।
राहवे सां० कालसर्परूपाधिदेवता० मि। भाराहा इमं ब०।
अनेन० राहुः प्री० ॥ ८ ॥ ॐ केतुंकृण्वं० थाः। केतवे सां०
चित्रगुप्तब्रह्मरूपाधिदेवताप्रत्यधिदे० मि। भोकेतो इमं ब०। अने-
न० केतुः प्री० ॥ ९ ॥ ॐ गुणानांत्वा० म्। गणपतये सां०
मि। भो गणपते इमं ब०। अनेन० गणपतिः प्री० ॥ १ ॥

प्र० अम्बेअम्बिके० म् ॥ दुर्गायै सांगायै० इमं० आयुःकर्तृत्वे० शां० प्र०
११० पु० तु० वरदा भव । अनेन० दुर्गा प्री० ॥ २ ॥ वायोजे० ये ।
वायवे सां० मि ॥ भोवायो इमं ब० । अने० वायुः प्री० ॥ ३ ॥
ॐ घृतं घृत० हा ॥ आकाशाय सां० मि । भो आकाश इमं
ब० ॥ अने० आकाशः प्री० ॥४॥ ॐ यावांकशा० म् । अश्वि-
भ्यां सांगाभ्यां० मि । भोअश्विनौ इमं बलिं० मम० आयुःकर्तारौ० १०१
वरदौ भवतम्० । अ० अश्विनौ प्रीयेताम् ॥ ५ ॥ ॐ वास्तोष्पते

प्र० दे । वास्तोष्पतये सां० मि । भोवास्तोष्पते इमं० ॥ अने०
वास्तोष्पतिः प्री० ॥ ६ ॥ अथवा दिक्पालेभ्य एकतन्त्रेणैकमेव
बलिं दद्यात् ॥ ॐ प्राच्यै दिशेस्वाहाऽर्व्वाच्यै दिशे स्वाहा दक्षिणायै
दिशेस्वाहार्व्वाच्यैदिशेस्वाहा प्रतीच्यै दिशेस्वाहार्व्वाच्यैदिशेस्वाहो-
दीच्यैदिशेस्वाहार्व्वाच्यै दिशे स्वाहोर्द्ध्वायै दिशे स्वाहार्व्वाच्यैदिशे
स्वाहार्व्वाच्यै दिशे स्वाहार्व्वाच्यैदिशेस्वाहा॥इन्द्रादिदशदिक्पाले-
भ्योनमःइति सम्पूज्य(हस्ते जलं गृहीत्वा) इन्द्रादिदशदिक्पालेभ्यः

ग्र० सांगेभ्यःसपरिवारेभ्यःसायुधेभ्यःसशक्तिकेभ्यः एतान्सदीपमाषभ- प्र०
१०२ क्तबलीन्समर्पयामि ॥ प्रार्थना ॥ भोभो इन्द्रादिदशदिक्पालाः सांगाः
सपरिवाराः सायुधाः सशक्तिकाः मम स० आयुकर्तारः क्षेमकर्तारः
शान्तिकर्तारः पुष्टिकर्तारः तुष्टिकर्तारः वरदा भवत ॥ (ततो हस्ते जलं गृ
हीत्वा) अनेन बलिदानेन इन्द्रादिदशदिक्पालाः प्रीयन्ताम् ॥ १ ॥ एवं
सर्वेभ्यो ग्रहेभ्यः एकतन्त्रेणैकमेव बलिं दद्यात् । ॐ ग्रहाऊर्जा० म् । १०२
ग्रहेभ्यो नमः इति संपूज्य (हस्ते जलं गृहीत्वा) सूर्यादिनवग्रहेभ्यः

सांगेभ्यः सपरिवारेभ्यः सायुधेभ्यः सशक्तिकेभ्यः अधिदेवताप्रत्य-
धिदेवतागणपत्यादिपञ्चलोकपालवास्तोष्पतिसहितेभ्यः एतं सदी-
पमाषभक्तबलिं समर्पयामि॥(प्रार्थना) भोभो सूर्यादिग्रहाःसांगाः
सपरिवाराःसायुधाः सशक्तिकाःअधिदेवताप्रत्याधिदेवतागणपत्या-
दिपञ्चलोकपालवास्तोष्पतिसहिताःमम सकुटुम्बस्य सपरिवारस्य
आयुःकर्तारः क्षेमकर्तारःशान्तिकर्तारः पुष्टिकर्तारःतुष्टिकर्तारःवरदा
भवत(हस्ते जलंगृहीत्वा)॥अनेनबलिदानेन सूर्यादिग्रहाःप्रीयन्ताम्

* अथ क्षेत्रपालबलिदानम् *

एकस्मिन् वंशादिपात्रे कुशानास्तीर्य तदुपरि मनुष्याहार-चतुर्गुणं द्विगुणं वा माषदध्योदनं वा जलपात्रं च निधाय चतुर्मुखदीपं प्रज्वाल्य हरिद्राकुंकुमादिपताकायुतं कृत्वा ॥ ॐ नहि-स्पश० वा० क्षेत्रपालाय नमः इति पंचोपचारैः षोडशोपचारैर्वा संपूज्य ( प्रार्थयेत् ) नमो वै क्षेत्रपालस्त्वं भूतप्रेतगणैस्सह ॥ पूजाबलिं गृहाणेमं सौम्यो भवतु सर्वदा ॥ १ ॥ पुत्रान्देहि धनं

प्र० १०३

देहि सर्वान्कामांश्च देहि मे ॥ आयुरारोग्यं मे देहि निर्विघ्नं कुरु सर्वदा ॥२॥ ततो बलिदानम् (हस्ते जलं गृहीत्वा )॥ क्षेत्रपालाय सांगाय सपरिवाराय सायुधाय सशक्तिकाय मारीगणभैरव-राक्षस-कूष्माण्ड-वेताल-भूत-प्रेत-पिशाच-डाकिनी-शाकिनी-पिशाचि-नी-गणसहिताय एतं सदीपमाषभक्तबलिं समर्पयामि ॥ (प्रार्थना) भो क्षत्रपाल क्षेत्रं रक्ष बलिं भक्ष मम सकुटुम्बस्य सपरिवारस्य आयुःकर्ता क्षेमकर्ता शांतिकर्ता पुष्टिकर्ता तुष्टिकर्ता वरदो भव॥

( हस्ते जलं गृहीत्वा ) अनेन बलिदानेन क्षेत्रपालः प्रीयताम् ॥
प्र० यजमानस्य मस्तकोपरि सकृद्भ्रामयित्वा शूद्रेण बलिं गृहीत्वा प्र०
१०४ चतुष्पथे निक्षिपेत् ॥ ततो यजमानस्तस्य पृष्ठतो द्वारपर्यन्तं गत्वा
जलं क्षिपेत् हिंकारेणेति मन्त्रेण ॥ ॐ हिङ्काराय स्वाहा हिङ्कृता-
यस्वाहाक्रंदतेस्वाहावक्रन्दायस्वाहा प्रोथतेस्वाहाप्रप्रोथायस्वा-
हागन्धायस्वाहा घ्रातायस्वाहानिविष्टायस्वाहोपविष्टायस्वाहास १०५
न्दितायस्वाहावल्गतेस्वाहा सीनाय स्वाहाशयानायस्वाहा स्वप-

तेस्वाहाजाग्रतेस्वाहाकूजतेस्वाहा प्रबुद्धायस्वाहाविजृम्भमाणाय
स्वाहाविचृत्ताय स्वाहा सठं.हानायस्वाहोपस्थितायस्वाहायनाय
स्वाहाप्प्रायणायस्वाहा ॥ यजमानः पाणिपादं प्रक्षाल्याचम्य ॥
ततः नारिकेलफलं रक्तवस्त्रवेष्टितं द्वादशषट्चतुःस्त्रुवेण गृहीत-
माज्यं स्त्रुच्यां कृत्वा तस्योपरि नारिकेलफलं संस्थाप्य ॐ पूर्णाहुत्यै
नमः इति षोडशोपचारैः संपूज्य पूर्णाहुतिं जुहुयात् । तत्र
मन्त्राः ॥ ॐ समुद्रादूर्म्मिर्म्मधुमाँ२॥ऽउदारदुपाꣳशुना सम

मृतत्वमानट् ॥ घृतस्यनाम गुह्यंय्यदस्तिजिह्वादेवानाममृतं- प्र० प्र०
१०५ स्यनाभिः ॥ १ ॥ वयन्नामप्रब्रवामाघृतस्यास्मिन्यज्ञेधारया-
मानमोभिः ॥ उपब्रह्मा शृणवच्छस्यमानञ्चतुः शृङ्गोवमी-
द्गौरऽएतत् ॥ २ ॥ चत्वारिशृङ्गात्रयोऽअस्यपादाद्वेशीर्षेसप्तहस्ता
सोऽअस्य ॥ त्रिधाबद्धोवृषभोरोरवीतिमहोदेवोमर्त्याँ२ऽआविवेश १०५
॥ ३ ॥त्रिधाहितम्पणिभिर्गुह्यमानङ्गविदेवासो घृतमन्वविन्दन् ॥
इन्द्रऽएकठं सूर्य्यऽएकञ्जजानव्वेनादेकंॅ स्वधयानिष्टतक्षुः

॥ ४ ॥ एताऽअर्षन्तिहृद्यात्समुद्राच्छतव्रंजारिपुणानावचक्षे ॥
घृतस्य धाराऽअभिचाकशीमि हिरण्ययोंव्वेतसोमध्यंऽआसाम्
॥ ५ ॥सम्यक्स्त्रवन्तिसरितोनधेनाऽअन्तर्हृदामनंसापयमानाः
॥ एतेऽअर्षन्त्यूर्म्मयोघृतस्यंमृगाऽइवाक्षिपणोरीषमाणाः ॥ ६ ॥
सिन्धोरिवप्प्राद्ध्वनेशूघनासोव्वातंप्प्रमियःपतयन्तियह्वाः॥ घृतस्य
धाराऽअरुषोनव्वाजीकाष्ठाभिन्दन्नूर्म्मिभिः पिन्वमानः ॥ ७ ॥
अभिप्प्रंवन्तसमंनेवयोषाः कल्याण्यःस्मयमानासोऽअग्निम् ॥

ग्र० घृतस्यधाराःसमिधोनसन्तताजुषाणोहर्य्यतिजातवेदाः ॥ ८ ॥ १०
१०६ कन्याऽइवव्वहतुमेतवाऽउँऽअञ्ज्यञ्जानाऽअभिचाकशीमि ॥ यत्र
सोमः सूयते यत्रंयज्ञोघृतस्यधाराऽअभितत्पवन्ते ॥ ९ ॥ अभ्य
र्षतसुष्टुतिङ्गव्यंयमाजिमस्मासुभद्राद्रविणानिधत्त॥ इमंय्यज्ञन्न-
यतदेवतानोघृतस्यधारामधुमत्पवन्ते ॥ १० ॥ धामन्तेविश्वम्भु
वनमधिश्रितमन्तः समुद्रेहृद्यन्तरायुषि ॥ अपामनीकेसमि
थेयऽआभृतस्तमश्याममधुमन्तन्तऽऊर्म्मिम् ॥ ११ ॥ पुनस्त्वा- १०६

दित्यारुद्रावसवः समिन्धतां पुनर्ब्रह्माणोवसुनीथयज्ञैः ॥ घृते-
नत्त्वन्तन्त्ववर्धयस्व सत्या ? संन्तुयजमानस्य कामा ः ॥ १२ ॥
सप्ततेऽअग्नेसमिधः सप्तजिह्वाः सप्तऽऋषयः सप्तधामप्रि-
याणि ॥ सप्तहोत्रां ः सप्तधात्वायजन्तिसप्त योनीरापृणस्व
घृतेनस्वाहा ॥ १३ ॥ मूर्द्धानंदिवोअरतिं पृथिव्याऽवैश्वानरऽमृतऽ
आजातमग्निम ॥ कविठं सम्राजमतिथिञ्जनानामासन्नापात्रं
ञ्जनयन्तदेवा ? ॥ १४ ॥ पूर्णादर्विपरापत सपूर्णापुनरापत ॥

प्र० क्रस्नेवाञ्विक्रीणावहाऽइषमूर्जंᳬठं० शतक्रतोस्वाहा ॥ १५ ॥ प्र०
१०७ इदमग्नये वैश्वानराय वसुरुद्रादित्येभ्यः शतक्रतवे सप्तवते
अग्नयेऽद्भ्यश्च न मम ॥ ( ततो वसोर्द्धारां जुहुयात् )
तत्र मंत्राः ॥ ॐ सप्तते अग्ने समिधः सु० ॥ १ ॥ शुक्रज्योति
श्चचित्रज्योतिश्च सत्यज्योतिश्च ज्योतिष्मांश्च ॥ शुक्रश्चऽऋतपा
श्चात्यंᳬठं० हा ꣳ ॥२॥ ईदृङ्चान्यादृङ्च सदृङ्च प्रतिसदृङ्च ॥ १०७
मितश्च सम्मितश्च सभराꣳ ॥ ३ ॥ ऋतश्च सत्यश्च ध्रुवश्च धरुणं

श्च॥ धर्त्ता चं विधर्ता चं विधारयः॥४॥ ऋतजिच्चं सत्यजिच्चं सेनजि च्चं सुषेणश्च ॥ अन्तिमित्रश्च दूरे अमित्रश्च गणः॥ ५ ॥ ईदृक्षास एतादृक्षास ऊषुणः सदृक्षासः प्रतिसदृक्षास एतन॥ मितासंश्च सम्मितासोनो अद्यस भरसो मरुतो यज्ञे अस्मिन्॥ ६ ॥ स्वतंवांश्च प्रघासी चं सान्तपनश्च गृहमेधी च ॥ क्रीडी चं शाकी चोज्जेषि ॥ ७॥ इन्द्रं दैवीर्विशो मरुतोनुवर्त्मानो भवन्यथेन्द्रं दैवीर्विशो मरुतोनुव- र्त्मानो भवन् ॥ एवमिमं यजमानं दैवीश्च विशो मानुषीश्चानुव

प० त्मानो भवन्तु ॥ ८ ॥ इम ꣳ स्तनमूर्ज्जस्वन्तन्धयापाम्प्रपीन प०
१०८ मग्नेसारिरस्यमध्ये ॥ उत्संञ्जुषस्वमधुमन्तमर्व्वन्त्समुद्रियꣳ सदं
नमाविंशस्व ॥९॥ घृतम्मिमिक्षेघृतमस्य० ॥ वसोः प० क्षः स्वाहा
॥१०॥ ततोऽग्निं प्रदत्तिणीकृत्य पश्चिमदेशे प्राङ्मुखोपविश्य ॥
ततः स्रुवेण भस्मानीय अनामिकया ॐ त्र्यायुषं जमदग्ने ꣳ
इति ललाटे। कश्यपस्य त्र्यायुषम् इति ग्रीवायाम्। यद्देवेषु त्र्यायु १०८
षम् इति दक्षिणबाहुमूले । तन्नोऽअस्तुत्र्यायुषमिति हृदि ॥

संस्रवप्राशनम् ॥ आचमनम् ॥ पवित्राभ्यां मार्जनम् ॥ अग्नौ पवित्रप्रतिपत्तिः ॥

ब्रह्मणे पूर्णपात्रदानम् ।

कृतस्य ग्रहशान्तिहोमकर्मणोऽङ्गतया विहितमिदं पूर्णपात्रं सदक्षिणं ब्रह्मणे तुभ्यमहं सम्प्रददे ॥ ॐ द्यौस्त्वा ददातु पृथिवी त्वा प्रतिगृह्णातु ॥ अग्नेः पश्चात्प्रणीताविमोकः ॥ ॐ आपः शिवाः शिवतमाः शांताः शान्ततमास्तास्ते कृण्वंतु भेषजम् ॥

प्र० उपयमनकुशैर्मार्जयेत्॥ उपयमनकुशानामग्नौ प्रक्षेपः॥ब्रह्मग्रन्थि- प्र०
१०६ विमोकः॥ ( ततः श्रेयः सम्पाद्य दानम् )॥ अद्येत्यादिकृतस्य
ग्रहशांत्याख्यस्य कर्मणो यजमानाय श्रेयोदानं करिष्ये॥
भवन्नियोगेन मया अस्मिन् ग्रहशान्त्याख्ये कर्मणि ( अमुका-
ख्ये कर्मणि वा ) यत्कृतं आचार्यत्वं तदुत्पन्नं श्रेयः तत् अमुना
साक्षतेन सजलेन पूगीफलेन तुभ्यमहं सम्प्रददे॥ प्रतिगृह्यताम्॥ १०६
देवस्य त्वेति प्रतिगृह्णामि॥ तेन श्रेयसा त्वं श्रेयोवान्भव॥ यज-

मानो भवामीति तेन वाच्यम् ॥ एवमेव ब्रह्मादयो ऋत्विजो जापकादयश्च दत्त्वा ( यद्वा ) ब्रह्मादयो ऋत्विजो जापकाश्च आचार्यद्वारा श्रेयोदानं कुर्युः ॥ तद्यथा ॥ भवन्नियोगेन मया अस्मिन् ग्रहशांत्याख्ये कर्मणि (अमुकाख्ये कर्मणि वा) यत्कृतं आचार्यत्वं तथा एभिर्ब्राह्मणैः सह यत्कृतं ब्रह्मत्वं गाणपत्यत्वं सादस्यत्वं तथा च यः कृतो जपः आचार्यत्वाद् ब्रह्मत्वाद् गाणपत्यत्वात् सादस्यत्वाज्जापकत्वात् यदुत्पन्नं श्रेयस्तदमुना साक्षतेन

सजलेन पूगीफलेन तुभ्यमहं सम्प्रददे॥तेन श्रेयसा त्वं श्रेयोवान्भव॥ प्र०
प्र० भवामीति तेन वाच्यमिति॥ ततो आचार्यादीन् वृणीत ब्राह्मणान्ग-
११० न्धवस्त्रालंकारादिभिर्यथाविभवैः पूजयेत्॥आचार्यादिभ्यो ब्राह्मणे-
भ्यो दक्षिणां दद्यात् ॥ तत्रायं क्रमः॥ आचार्याय गां दद्यात् ॥१॥
ब्रह्मणे वृषभम् ॥२॥ सदस्याय अश्वम् ॥ ३ ॥ ऋत्विग्भ्यो सुवर्णं
दद्यात् ॥ ४ ॥ कृतस्य ग्रहशान्तिकर्मणः ( वा अमुककर्मणः ) ११०
सांगतासिद्ध्यर्थं तत्संपूर्णफलप्राप्त्यर्थमिदं गोनिष्क्रयभूतं द्रव्यं

अमुकगोत्राय अमुकशर्मणे ब्राह्मणाय आचार्याय तुभ्यमहं सम्प्र-
ददे ॥ ॐ स्वस्तीति पठेत्॥१॥ कृ० इदं वृषनिष्क्रयभूतं द्रव्यं य०
॥ २ ॥ कृ० इदं सदस्याय अश्वनिष्क्रयभू० ॥ ३ ॥ कृ० इदं
ऋत्विग्भ्यः सुवर्णनिष्क्रयभू० ॥ ४ ॥ ततो ब्राह्मणभोजनसंकल्पं
कुर्यात् ॥ कृतस्य० ग्रहशां० कर्म० यथासंख्याकान्ब्राह्मणान्
यथाकाले यथोत्पन्नेनान्नेनाहं भोजयिष्ये ॥ भोजनांते तेभ्यस्ता-
म्बूलदक्षिणां च दास्ये ॥ ततो ग्रह( वा प्रधान )पीठदेवतानां

गन्धादिपंचोपचारैरुत्तरपूजनं कुर्यात् ॥गणपत्याद्यावाहितदेवता-
भ्यो नमः॥ आचार्याय प्रधानपीठादि दद्यात् ॥ कृ०थंइदं प्रधान-
पीठं ग्रहपीठं मातृकापीठं सोपस्करं दक्षिणासहितं आचार्याय तु०।
ततो रुद्रकलशदेवतान्तरकलशोदकमेकस्मिन्पात्रे कृत्वा दूर्वा-
पंचपल्लवैरुदङ्मुख आचार्यास्तिष्ठन् चत्वारो ऋत्विजश्च सकुटुम्बं
स्वरुत्तरतः सपत्नीकं यजमानं प्राङ्मुखमुपविष्टमभिषिंचेयुः ।

प्र० १११

### * तत्राभिषेकमन्त्राः *

देवस्यत्वा० ॥ सरस्वत्यैर्व्वाचोयन्तुर्यन्त्रियेदधामिबृहस्पतेष्ट्वा साम्राज्येनाभिषिञ्चाम्यसौ ॥१॥ देवस्यत्वा० ॥ सरस्वत्यैर्व्वाचो यंतुर्यंत्रेणाग्नेः साम्राज्येनाभिषिञ्चामि ॥ २ ॥ देवस्य त्वा० अश्विनोर्भैषज्येनतेजसेब्रह्मवर्च्चसायाभिषिंचामिसरस्वत्यैभैषज्ये-नव्वीर्यायान्नाद्यांयाभिषिंचामीन्द्रस्येन्द्रियेणबलाय श्रियै यशसेऽ-भिषिंचामि॥३॥ ॐ सुरास्त्वामभिषिंचन्तु ब्रह्मविष्णुमहेश्वराः॥

वासुदेवो जगन्नाथस्तथा संकर्षणो विभुः ॥ १ ॥ प्रद्युम्नश्चानि-
रुद्धश्च भवन्तु विजयाय ते ॥ आखण्डलोऽग्निर्भगवान् यमो वै नि-
र्ऋतिस्तथा ॥ २ ॥ वरुणः पवनश्चैव धनाध्यक्षस्तथा शिवः॥
ब्रह्मणा सहिताः सर्वे दिक्पालाः पांतु ते सदा ॥३॥ कीर्तिर्लक्ष्मी-
र्धृतिर्मेधापुष्टिः श्रद्धाक्रियामतिः॥ बुद्धिर्लज्जावपुः शान्तिः कान्ति-
स्तुष्टिश्च मातरः॥ ४ ॥ एतास्त्वामभिषिंचन्तु देवपत्न्यः समा-
गताः ॥ आदित्यश्चन्द्रमा भौमो बुधजीवसितार्कजाः ॥ ५ ॥

ग्रहास्त्वामभिषिंचन्तु राहुः केतुश्च तर्पिताः ॥ देवदानवगन्धर्वा
यक्षराक्षसपन्नगाः ॥६॥ ऋषयो मनवो गावो देवमातर एव च।
देवपत्न्यो द्रुमा नागा दैत्याश्चाप्सरसाङ्गणाः ॥ ७ ॥ अस्त्राणि
सर्वशस्त्राणि राजानो वाहनानि च। औषधानि च रत्नानि काल-
स्यावयवाश्च ये ॥ ८ ॥ सरितः सागराः शैलास्तीर्थानि जलदा
नदाः।एते त्वामभिषिंचन्तु धर्मकामार्थसिद्धये॥९॥ अमृताभिषेकोऽ
स्तु॥ शान्तिः पुष्टिस्तुष्टिश्चास्तु ॥ अन्येभ्यो ब्राह्मणेभ्यो यथाश-

क्ति भूयसीं दक्षिणां दद्यात् ॥कृ० थं तन्मध्ये न्यूनातिरिक्तदोषपरिहारार्थंनानानामगोत्रेभ्यो नानाशर्मभ्यो ब्राह्मणेभ्यः समाश्रितबन्धुवर्गेभ्यो दीनानाथेभ्यश्च यथोत्साहां भूयसीं दक्षिणां विभज्यदातुमहमुत्सृजे ॥

## अथावाहितदेवतानां विसर्जनम् ।

ततो देवताग्निं सानुनयं विसृज्य ॥ ॐ उत्तिष्ठंब्रह्मणस्पते देवयन्तंस्त्वेमहे । उपप्रयन्तुमरुतः सुदानवऽइन्द्रंप्राशूर्भवासचा ॥

प्र० ११३

यान्तु देवगणाः सर्वे पूजामादाय मामकीम्॥ इष्टकामार्थसिद्ध्यर्थं
पुनरागमनाय च । आवाहितदेवताः स्वस्थाने गच्छत ॥१॥ ॐ
यज्ञंयज्ञङ्गच्छयज्ञपतिङ्गच्छ स्वांयोनिङ्गच्छस्वाहा ॥ एषतेयज्ञो
यज्ञपतेसहसूक्तवाकः सर्ववीरस्तज्जुषस्वस्वाहा । गच्छ गच्छ सुर-
श्रेष्ठ स्वस्थाने परमेश्वर। यत्र ब्रह्मादयो देवास्तत्र गच्छ हुताशन॥
यज्ञनारायण स्वस्थाने गच्छ॥ २॥ ॐ चतुर्भिश्च चतुर्भिश्च
द्वाभ्यां पञ्चभिरेव च ॥ हूयते च पुनर्द्वाभ्यां तस्मै यज्ञात्मने

ग्र० नमः ॥ मया यत्कृतं यथाकालं यथादेशं यथाज्ञानं यथाशक्ति ग्र०
ग्रहयज्ञाख्यं कर्म तेन श्रीपापापहा महाविष्णुः प्रीयताम् ॥ ॐ
११४ तत्सद्ब्रह्मार्पणमस्तु ॥ सकुशजलं भूमौ क्षिपेत् करौ संपुटीकृत्य ॥
मया यत्कृतं ग्रहयज्ञाख्यं कर्म तत्कालहीनं भक्तिहीनं श्रद्धाहीनं
भवतां ब्राह्मणानां वचनात् श्रीसूर्याद्यावाहितदेवताप्रसादात्सर्वं विधेः
परिपूर्णमस्त्विति भवन्तो ब्रुवन्तु ॥ अस्तु परिपूर्णं इति ब्राह्मणाः ११५
वदेयुः ।

त्तमाप्रार्थना । जपच्छिद्रं तपश्छिद्रं यच्छिद्रं शान्तिकर्मणि ॥ सर्वं भवतु मेऽच्छिद्रं ब्राह्मणानां प्रसादतः ॥ प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु यत् । स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिः॥ यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु ॥ न्यूनं संपूर्णतां याति सद्यो वन्दे तमच्युतम् ॥ ओं विष्णवे नमः ॥ ३ ॥ ततः तिलकाशीर्वादः ॥ श्रीर्वर्चस्वमायुष्यमारोग्यमाविधात्पवमानं महीयते ॥ धान्यं धनं पशुं बहुपुत्रलाभं शतसंवत्सरं दीर्घमायुः॥

मन्त्रार्थाः सफलाः सन्तु पूर्णाः सन्तु मनोरथाः ॥ शत्रूणां बुद्धिनाशोऽस्तु मित्राणामुदयस्तव ॥ यज्ञान्ते ब्राह्मणान्भोजयित्वा दीनानाथांश्चान्नादिना सन्तोष्य स्वयं सुहृन्मित्रादियुतः सोत्साहं सन्तुष्टो हविष्यं भुञ्जीतेति शिवम् ।

इति श्रीकाशीस्थ-सुप्रसिद्धमध्यमेश्वर-वास्तव्येनाऽग्निहोत्रिणा पं० श्रीवायुनन्दनमिश्रकर्मकाण्डिना निर्मितोऽयं ग्रहप्रयोगः समाप्तः ।

पुस्तकप्राप्तिस्थानम्—

मास्टर खेलाड़ी लाल एण्ड सन्स संस्कृत बुकडिपो कचौड़ी गली बनारस ।

बाबू कैलासनाथ भार्गव द्वारा—भार्गव भूषण प्रेस, त्रिलोचन काशी में मुद्रित ।

## अथ सर्वतोभद्रचक्रम् ।




सपेद उपर की सीढा ४ अंगुल चौड़ी वो ४ अंगुल ऊंची
लाल उसके नीचे की ३ अंगुल चौड़ी वो
३ अंगुल ऊंची
काला उसके नीचे की २ अंगुल चौड़ी
२ अंगुल ऊंची

## कुंड स्वरूपम्

योनी १२ अंगुल ऊंची १२ अंगुल लम्बी ८ अंगुल
चौड़ी रक्त वर्ण
जैसा कुंड बड़ा वैसी ही नाभी बड़ी








मैनेजिंग प्रोपाइटर बाबू मनोहरदास द्वारा, नार्जप्रिंटिंग वर्क्स, कालभैरव काशी में मुद्रित ।
प्रकाशक मुन्शी लाल खेलाड़ी लाल ऐण्ड सन्स संस्कृत बुकडीपो कचौड़ीगली बनारस ।

अथ नवग्रहमण्डलचक्रम् ।

पू०

| | | |
|---|---|---|
| सफेद चन्द्र  | शुक्र सफेद   | बुध हरा   |
| मंगल लाल   | सूर्य लाल  | बृहस्पति पीला  |
| राहु काला  | शनि काला  | केतु काला  |

द० प० उ०

॥ सप्तघृतमातृकाचक्रम् ॥

॥ श्रीः ॥



कीर्तिर्लक्ष्मी धृतिर्मेधास्वाहाप्रज्ञासरस्वती ।

मांगल्येषुप्रपूज्यन्ते सप्तैताघृतमातरः ॥ १ ॥

॥ इतिवसोर्धारा ॥

पूर्व

| | | | |
|---|---|---|---|
| आत्मनः कुल देवता १७ | लोकमातरः १३ | देवसेना ९ | मेधा ५ |
| तुष्टिः १६ | मातरः १२ | जया ८ | शची ४ |
| पुष्टिः १५ | स्वाहा ११ | विजया ७ | पद्मा ३ |
| धृतिः १४ | स्वधा १० | सावित्री ६ | गौरी १ गणेश २ |

॥ षोडशमातृकाचक्रम् ॥

# चतुर्लिङ्गतो भद्रचक्रम् ।

पू०

काला

लाल

| | | | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| स | स | ह | र | र | र | कृ | कृ | कृ | कृ | कृ | र | र | र | ह | स | स |
| स | कृ | ह | ह | र | पी | | कृ | कृ | कृ | | पी | र | ह | ह | कृ | स |
| ह | ह | कृ | ह | ह | | | | कृ | | | | ह | ह | कृ | ह | ह |
| र | ह | ह | का | ह | ह | | कृ | कृ | कृ | | ह | ह | कृ | ह | ह | र |
| र | र | ह | ह | पी | पीं | कृ | कृ | कृ | कृ | कृ | पीं | पी | ह | ह | र | र |
| र | पी | | ह | पी | र | र | र | कृ | र | र | र | पी | ह | | पी | र |
| कृ | | | | कृ | र | पी | पी | पी | पी | पी | र | कृ | | | | कृ |
| कृ | कृ | | कृ | कृ | र | पीं | | | | पी | र | कृ | कृ | | कृ | कृ |
| कृ | कृ | कृ | कृ | कृ | कृ | पी | | | | पी | कृ | कृ | कृ | कृ | कृ | कृ |
| कृ | कृ | | कृ | कृ | र | पी | | | | पी | र | कृ | कृ | | कृ | कृ |
| कृ | | | | कृ | र | पी | पी | पी | पी | पी | र | कृ | | | | कृ |
| र | पी | | ह | पी | र | र | र | कृ | र | र | र | पी | ह | | पी | र |
| र | र | ह | ह | पी | पी | कृ | कृ | कृ | कृ | कृ | पी | पी | ह | ह | र | र |
| र | ह | ह | कृ | ह | ह | | कृ | कृ | कृ | | ह | ह | कृ | ह | ह | र |
| ह | ह | कृ | ह | ह | | | | कृ | | | | ह | ह | कृ | ह | ह |
| स | कृ | ह | ह | र | पी | | कृ | कृ | कृ | | पी | र | ह | ह | कृ | स |
| स | स | ह | र | र | र | कृ | कृ | कृ | कृ | कृ | र | र | र | ह | स | स |

उ० काला लाल    लाल काला द०

लाल

काला

प०

